॥ २४ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुविप्रपुरावृत्तांकथांपापप्रणाशनीम् ॥ पुरार्गलपुरेविप्रोधर्मकेतुर्बभूवह ॥ २५ ॥ धर्मा
त्मासत्यसंकल्पोविद्वान्दीनजनाश्रयः॥नित्यंदीनांस्तथामूकान्वृद्धानाश्रयवर्जितान् ॥२६॥भोजयित्वास्वयंभुंक्तेदारैःपुत्रैस्त
थावृतः ॥ एकदाजडमूर्तिर्वैब्राह्मणोवन्हिवर्जितः ॥ २७ ॥ पशुबुद्धिर्ज्ञानशून्योदृषदात्माययथापरः ॥ क्षुत्पिपासापरिज्ञान
मात्रंवेत्तिनचापरम् ॥ २८ ॥ आययौक्षुधयाविष्टोधर्मकेतोर्गृहेमुने ॥ जगादसंज्ञयातत्रहस्तयोर्भोजनायवै ॥ २९ ॥ दत्तंच
तेनविप्रेणभोजनंभोजनोत्तमम् ॥ अनन्यगतयेतस्मैददावन्नंमहामते ॥ ३० ॥ भोजनाच्छादनेचैवधर्मकेतुर्महायशाः ॥ क
दाचिद्दैवयोगेनमायापुर्यांसमाययौ ॥ ३१ ॥ सोपिमूकोशनापेक्षीज्ञानशून्योमहामते ॥ नैतस्यस्वपरज्ञानंभक्ष्येऽभक्ष्येच
निर्णयः ॥ ३२ ॥ अगम्यागमनेचैवपानापानेतथैवच ॥ मार्गेसार्थात्परिभ्रष्टोयवनैःसंगतोह्यभूत् ॥ ३३ ॥ तत्रापितैस्तदाभु
क्तंभक्ष्यंचभ्रष्टबुद्धिना ॥ एवंक्रमेणमूकेनयौवनोन्मदशालिना ॥ ३४ ॥ संगमश्चकृतस्तेननिष्ठयाद्रुहिणात्मज ॥ नीचसंग
तिकोविप्रोमत्याग्रावाग्रजन्मयः ॥ ३५ ॥ गतःकनखलेतीर्थेस्नातश्चधर्मपीडितः ॥ सार्थलग्नःपुनर्विप्रोर्गलापुर्यांसमाययौ
॥ ३६ ॥ आययौकनखलेतीर्थेमुनिवृंदसमाकुले ॥ विषुवेसंक्रमेपुण्येघर्मार्तोमज्जनायवै ॥ ३७ ॥ कालेसकालमापन्नोज ॥ ११ ॥
डमूर्तिर्मुनीश्वर ॥ यांगतिंयोगमापन्नायांगतिंधर्मशीलिनः ॥ ३८ ॥ यांकाशीमरणायांतिप्राप्तांगतिमुत्तमाम् ॥ तीर्थस्ना

नप्रभावेणभक्त्याविरहितोऽपिसः ॥ ३९ ॥ ज्येष्ठेमासेसितेपक्षेदशम्यांस्नानमात्रतः ॥ प्राप्यतेपरमंस्थानंदुर्लभंयोगिनाम
पि ॥ ४० ॥ दत्ताविप्रायगौर्येनदत्तातेनवसुंधरा ॥ श्राद्धंकृतंचयैस्तत्रगयायाःफलमाप्नुयुः ॥ ४१ ॥ अन्नदानंकृतंयेननदरि
द्रोभवेत्क्वचित् ॥ धन्याःकाश्यांमृतामर्त्याधन्याः कनखलेतथा ॥ ४२ ॥ स्नाताश्चमुनिशार्दूलपुनरावृत्तिदुर्लभाः ॥ धन्यानां
मरणंचात्रमायापुर्यांमहामुने ॥ ४३ ॥ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायामाहात्म्येनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ कर्तव्यंचकथंश्राद्धंगोदानंचान्नदानकं ॥ कोविधिःकश्चकालोवैकिंपात्रंकिंचदैवतम् ॥ १ ॥ एतत्सर्वंस
मासेनकथयस्वशिवात्मक ॥ येनयेनप्रकारेणकर्तव्यानिमुमुक्षुभिः ॥ २ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुनारदतत्सर्वंयत्पृ
ष्टोऽहंत्वयाद्यवै ॥ पित्रोःकथयतोर्विप्रश्रुतंसांनिध्यगेनहि ॥ ३ ॥ आदौतीर्थागमेदेवगणेशंभैरवंतथा ॥ वेदव्यासंपुराणर्षिम
त्रैवप्रतिपूज्यहि ॥ ४ ॥ गच्छेज्जितेंद्रियःशांतोब्रह्मनिष्ठापरस्तथा ॥ तीर्थप्राप्तिदिनेकुर्यान्निराहारंचमज्जनम् ॥ ५ ॥ ततः
प्रातःसमुत्थायकृतनित्यक्रियोमुनिः ॥ भैरवाज्ञांगृहीत्वातुतीर्थस्नानमथाचरेत् ॥ ६ ॥ स्नानंविप्राग्रतःकुर्यात्साक्षिणिस्नान
कर्मणि ॥ नमस्कृत्यततोविप्रानभिवाद्यचदेवताः ॥ ७ ॥ श्राद्धंकुर्यात्प्रयत्नेनविधिनाशास्त्रदृष्टया ॥ आसनंपरिकल्प्यादौपिं
डदानंततःपरम् ॥ ८ ॥ ततोऽवनेजनंकुर्यात्पुनःपूर्व[illegible]दक्षिणांततोदद्याद्ब्राह्मणेभ्योयथाधनम् ॥ ९ ॥ यस्यसंतो

षमायांतितीर्थस्थाभूमिदेवताः ॥ तस्यसर्वंकृतंश्राद्धंसफलंस्यान्महामुने ॥ १० ॥ असंतुष्टायस्यविप्रास्तीर्थस्थाःश्राद्धकर्म
णि ॥ असंतुष्टास्तुपितरोज्ञेयाधर्मपरायणैः ॥ ११ ॥ तस्मात्सर्वप्रयत्नेनसंतोषंजनयेत्सुधीः ॥ अन्नदानंततःकुर्यात्सांग
तासिद्धिहेतवे ॥ १२ ॥ एतत्तीर्थेप्रकर्तव्यंश्राद्धंश्रद्धासमन्वितैः ॥ श्राद्धात्संततिमाप्नोतिश्राद्धाद्धैपरमंयशः ॥ १३ ॥ श्राद्धाद्व
र्षतिपर्जन्यःश्राद्धात्सुखमवाप्नुयात् ॥ श्राद्धात्स्वर्गमवाप्नोतिश्राद्धान्मोक्षंचविंदति ॥ १४ ॥ योनरःश्राद्धहीनःस्यात्तस्यनो
वर्द्धतेप्रजा ॥ मृतेनरकमाप्नोतितस्माच्छ्राद्धंनसंत्यजेत् ॥ १५ ॥ तीर्थमागत्ययोमर्त्यःश्राद्धकर्मविवर्जितः ॥ सर्वंतीर्थफलं
व्यर्थंजीवितंचतथामुने ॥ १६ ॥ तस्माच्छ्राद्धपरोभूयात्तीर्थेवापिगृहेतथा ॥ धन्यानांमानुषेजन्मतत्रापिहिमवत्स्थले ॥ १७ ॥
मायापुर्यांहितत्रापितत्रभक्तिमतांकुले ॥ वेदाध्ययनकर्माणितथायज्ञादिकाःक्रियाः ॥ १८ ॥ पृथ्वीपर्यटनंचापिस्नानंसाग
रसंगमे ॥ मायापुरीनिवासस्यकलांनार्हंतिषोडशीम् ॥ १९ ॥ तेनतप्तंहुतंतेनतेनदत्तावसुंधरा ॥ तेनसर्वंकृतंकर्ममुक्तिद्वार
प्रदंमुने ॥ २० ॥ येनात्रविदुषेदत्तागौःस्वर्गीयफलप्रदा ॥ यावंतितच्छरीरस्थरोमाणिमुनिपुंगवः ॥ २१ ॥ तावत्कल्पसह
स्राणिस्वर्गलोकेमहीयते ॥ धन्याःकलियुगेघोरेयेगांदास्यंतितत्रवै ॥ २२ ॥ एकत्रसर्वदानानिगोदानंचपुरामुने ॥ तुलया ॥ २० ॥
संधृतेचैवगोदानंचाभवद्गुरु ॥ २३ ॥ अनुमंतापियोमर्त्योगोदानेदीनवत्सलः ॥ सोपिस्वर्गमवाप्नोतियावदिंद्राश्चतुर्दश ॥

नवान्समजायत ॥ अधिकारविहीनस्यशूद्रस्यापिमहामते ॥ १० ॥ रामभद्रस्यभगवदवतारस्यसंनिधौ ॥ बभूवतस्यमर
णंमुक्तिश्चाप्यनिवर्तिनी ॥ ११ ॥ दर्शनाद्यस्यपुण्यस्यक्षेत्रस्यपरमांगतिम् ॥ शूद्रोपिप्रययौविप्रकिमन्येब्राह्मणादयः
॥ १२ ॥ दृष्ट्वामायापुरींपुण्यांस्नात्वाचब्रह्ममंदिरे ॥ वाराणसींलभेदंतेसत्यंसत्यंहिनारद ॥ १३ ॥ त्रिषुस्थानेषुयेमर्त्यानिवसंति
महामुने ॥ गंगाद्वारेतथाकाश्यांगंगासागरसंगमे ॥ १४ ॥ नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि ॥ धन्यानांपुरुषाणांचगंगा
द्वारस्यदर्शनात् ॥ १५ ॥ विशेषतस्तुमेषार्कसंक्रमेऽतीवपुण्यदे ॥ तत्रापिकुंभराशिस्थेवाक्पतौसुरवंदिते ॥ १६ ॥ अयनेविषुवे
चैवसंक्रांतौचंद्रसूर्ययोः ॥ ग्रहणेवाव्यतीपातेपूर्णिमायांमहामुने ॥ १७ ॥ सोमवारान्वितायांवायस्यांकस्यामथापिवा ॥ अ
मावास्यांतथामाघेवैशाखेकार्तिकेपिवा ॥ १८ ॥ तिस्रःकोट्योर्धकोटिश्चतीर्थानांमुनिसत्तम ॥ भजंतेसन्निधिंतत्रस्नातःसर्वे
त्रजायते ॥ १९ ॥ क्षेत्राणांपंचकंपृथ्व्यांस्थास्यतिप्रबलेकलौ ॥ गंगाद्वारंचकेदारंकाशीगंगागमस्तथा ॥ २० ॥ गंगाचसंगता
यत्रसागरेणमहामते ॥ गंगापिस्थास्यतेऽत्रैवसत्यमेतच्छिवेरितम् ॥ २१ ॥ अत्रस्नातोऽधिकारीस्याद्गंतुंकेदारसन्निधिम् ॥
तस्मात्सर्वप्रयत्नेनस्नायादत्रशुभेप्सिता ॥ २२ खलःकोनात्रमुक्तिंवैभजतेतत्रमज्जनात् ॥ अतःकनखलंतीर्थंनाम्नाचक्रुर्मु
नीश्वराः ॥ २३ ॥ ॥ नारदउवाच ॥ ॥ कथमेतत्समुत्पन्नंकःखलोमुक्तिमागतः ॥ एतत्सर्वंसमासेनमहासेनवदस्वमे

मा०क्षे० भोगवल्लभाम् ॥ भूरादिकतपोंतस्थांवीणापुस्तकधारिणीं ॥ ३९ ॥ दारुमूर्तिसमासीनांश्रियंपीनपयोधराम् ॥ केयूरांगदभू मा०अ०
॥२१॥ षांचचतुर्बाहुंमनोहराम् ॥ ४० ॥ सिंहासनकृतावासांरक्तवस्त्रांरणप्रियां ॥ आर्यांकार्यकरींवंदेसंसारोद्भूतिहेतवे ॥ ४१ ॥ १०
इतिसंस्तुवतस्तस्यब्रह्मणोविष्णुजन्मनः ॥ कोटिसूर्यप्रतीकाशादेवीप्रादुरभून्मुने ॥ ४२ ॥ उवाचवचनंदिव्यंब्रह्माणं
कमलोद्भवम् ॥ किमर्थंसंस्तुताब्रह्मन्किंकार्यंकरवाणिते ॥ ४३ ॥ नवंध्यंदर्शनंमेस्तिकृतंयत्स्तवनंत्वया ॥ प्रसन्नास्मिन
संदेहोभक्तिमानसिसुव्रत ॥ ४४ ॥ ॥ ब्रह्मोवाच ॥ ॥ सृष्टिमार्गप्रदात्वंहिप्रकृतिःपरमात्मनः ॥ त्वदिच्छयाजगत्सर्वंजा
यतेसचराचरम् ॥ ४५ ॥ प्रजाःसृष्टामयासर्वास्त्रिगुणागुणवर्जिते ॥ नवर्द्धंतेशिवायज्ञैर्यज्ञभागाशनात्ततः ॥ ४६ ॥ नवै
वर्षतिपर्जन्यस्ततोऽन्नंनावतिष्ठति ॥ उपायंकुरुदेवेशियथास्यादन्नसंभवः ॥ ४७ ॥ ॥ देव्युवाच ॥ ॥ शृणुवत्सय
थावद्वैप्रोच्यतेतवयन्मया ॥ स्वस्वभागान्सुराःसर्वेददंतांकार्यसिद्धये ॥ ४८ ॥ अहंचतेनरूपेणभविष्यामिमहीतले ॥ म
त्तःसर्वसुरज्येष्ठभविष्यतिनसंशयः ॥ ४९ ॥ ॥ स्कंदउवाच ॥ ॥ इतिश्रुत्वावचस्तस्याःसर्वेदेवाःसवासवाः ॥ स्वंस्वं
भागंभागसिद्ध्यैददुस्तेजोमयंशुभम् ॥ ५० ॥ सापिमायाभगवतीगृहीत्वाभागमुत्तमम् ॥ निममज्जक्षीरनिधौपश्यतांत्रिदिवौ ॥२१॥
कसाम् ॥ ५१ ॥ आश्चर्यंपरमंलेभेदृष्ट्वातत्कौतुकंमहत् ॥ किंकिमेतत्किंकिमेतदितिप्रोचुःस्वरालयाः ॥ ५२ ॥ एतस्मिन्नं

तरेखेवाग्बभूवमुनिसत्तम ॥ ॥ वागुवाच ॥ ॥ भोभोःसुराःकिमर्थंहिक्लेशंप्राप्तामदाश्रितम् ॥ ५३ ॥ मथध्वमेनंसुभ
गाःपयोधिंकार्यसिद्धये ॥ अन्यान्यपिमहाभागाःप्राप्स्यथप्रवराणिमे ॥ ५४ ॥ ॥ स्कंदउवाच ॥ ॥ इतिश्रुत्वावचस्त
स्याहृष्टास्तेत्रिदिवौकसः ॥ ममंथुर्मिलितास्तत्रपयोधिंकार्यगौरवात् ॥ ५५ ॥ मंथानंमंदरंकृत्वानेत्रंकृत्वातुवासुकिं ॥ कूर्म
रूपोहरिस्तत्रसर्वशक्तिधरःप्रभुः ॥ ५६ ॥ मथितेदुग्धनिलयेजातान्यन्यान्यपिक्रतोः ॥ कामधेनुस्तथोत्पन्नासर्वदेवांश
संभवा ॥ ५७ ॥ दृष्ट्वातांनिर्जराःसर्वेजयेत्यूचुर्मुदान्विताः ॥ गृहीत्वातांततोधेनुंब्रह्मलोकंययुर्मुने ॥ ५८ ॥ पूजयामासुरत्यं
तंप्रदक्षिणक्रमादिभिः ॥ सापूजिताभगवतीकामधेनुर्ददौवरान् ॥ ५९ ॥ पयश्चामृतकल्पंहियत्पीत्वामृतमश्नुते ॥ घृतंच
सादद्दौधेनुर्यज्ञायच्छंदितायतः ॥ ६० ॥ यज्ञैस्तृप्ताःसुराःसर्वेसुभिक्षंवाभवत्ततः ॥ प्रजाश्चवृद्धिमापन्नाःकामधेनोःप्रसा
दतः ॥ ६१ ॥ पवित्रापरमासावैसर्वदेवमयीशुभा ॥ अवतीर्णास्वयंदेवीगौर्भूत्वाभवभामिनी ॥ ६२ ॥ पूजितायेनगौर्वि
प्रपूजिताःसर्वदेवताः ॥ प्रदक्षिणीकृतायेनपरिक्रांतावसुंधरा ॥ ६३ ॥ मंगलंदर्शनंप्रातःपूजनंपरमंपदम् ॥ स्पर्शनंपरमंती
र्थंनास्तिधेनुसमंक्वचित् ॥ ६४ ॥ अज्ञानाज्ज्ञानतोवापियेनदृष्टामुनीशगौः ॥ तस्यपापंक्षयंयातियथाग्नेस्तूलराशयः ॥ ६५ ॥
हस्तेकृत्वातुगोपुच्छंपितृतर्पणमाचरेत् ॥ निरयस्थापिपितरोब्रह्मलोकमवाप्नुयुः ॥ ६६ ॥ गोछायायांमहाभागश्राद्धंकुर्वं

तियेनराः॥ गयाश्राद्धफलंतेषांकनिष्ठंस्यान्महामते ॥ ६७ ॥ गोमयेनानुलिप्तायांभूमौयाःकुर्वतेक्रियाः ॥ अनंतफलदाववि
प्रभवेयुर्वैनसंशयः ॥ ६८ ॥ सकृत्प्राश्नातिगोमूत्रंयोनरश्चमहामुने ॥ दुर्भोज्यभोजनाच्चैवदुरुक्ताद्दुर्नयोच्चरात् ॥ ६९ ॥ मु
च्यतेसर्वपापेभ्योगच्छेद्ब्रह्मपुरंमृतः ॥ अपवित्रकसंस्थानंशुध्येदेकेनबिंदुना ॥ ७० ॥ कंडूयनंगवांयोवैकरोतियदिमानवः ॥
गोहत्याब्रह्महत्याभ्योमुच्यतेनात्रसंशयः ॥ ७१ ॥ गोग्रासंभोजनेयस्तुदद्याद्गोभ्योमहामुने॥ ब्राह्मणाभोजितास्तेनसहस्रं
वेदपाठिनः ॥ ७२ ॥ तीर्थेदेवालयेवापिग्रहणेचंद्रसूर्ययोः ॥ व्यतीपातेचमन्वादौयुगादौसंक्रमेषुच ॥ ७३ ॥ दातातस्यगृही
तापितावुभौस्वर्गगामिनौ ॥ ससुवर्णासवस्त्राचसर्वाभरणभूषिता ॥ ७४ ॥ पयस्विनीसवत्साचयेनदत्तामुनीशगौः ॥ तेनत
प्तंहुतंतेनजप्तंतेनकृतंतथा ॥ ७५ ॥ नानाद्रव्यान्वितातेनदत्ताविप्रवसुंधरा ॥ शृणुनारदयद्वृत्तमितिहासंपुरातनं ॥ ७६ ॥ उ
ज्जयिन्यांपुराह्यासीद्वर्धमानोमहावणिक् ॥ बभूवधनधान्यैश्चपुत्रपौत्रैश्चसंवृतः ॥ ७७ ॥ येनकेनप्रकारेणकृतंद्रव्यार्जनंत
था ॥ धनांभोधिस्ततोजातोरत्नानांनिचयस्तथा ॥ ७८ ॥ पुत्राश्चापिमहाभागचत्वारोस्याभवंस्तथा ॥ कृत्वाद्रव्यविभागंच
कालधर्ममुपागतः ॥ ७९ ॥ त्रयःपुत्रास्तुतस्यासन्वणिग्धर्मरतामुने ॥ अभवत्पश्चिमोयस्तुनाम्नाचंद्रवरोधमः ॥ ८० ॥ द्यू ॥ २१ ॥
तवेश्यादिव्यसनैःक्षयंनीतंमहद्धनं ॥ जीवनंकृतवान्वेश्यापरिचारेणवैततः ॥ ८१ ॥ अन्वेषतेविटांश्चैवकिंचिदादायतद्धनम् ॥

॥ २४ ॥ समुद्राश्चचतुःष्पात्सुरोमकूपेषुदेवताः ॥ सर्वतीर्थानिचतथाह्यंगेषुसरितस्तथा ॥ २५ ॥ तस्मात्पृथ्वीसमाज्ञेयाधेनु
र्धन्यतमाभुवि ॥ पुराकल्पादिकेविप्रजगदंबुशयेसति ॥ २६ ॥ वेदहीनंजगत्सर्वंनष्टयज्ञंचभूसुर ॥ दृष्ट्वासर्वांस्तथालोकान्ब्र
ह्मालोकपितामहः ॥ २७ ॥ चिंतोद्विग्नमनाजातोनववर्धुर्यतःप्रजाः ॥ यज्ञाद्भवतिपर्जन्यःपर्जन्यादन्नसंभवः ॥ २८ ॥ अन्ना
द्भवंतिभूतानिस्थावराणिचराणिच ॥ यज्ञोनजायतेविप्रसर्पिषारहितोयतः ॥ २९ ॥ सर्पिषोनिःसृताधेनुस्तदभावेखिलंगतम्
॥ तस्माद्भावःप्रसृष्टाश्चमयासंसारहेतवे ॥ ३० ॥ इतिचिंतयतस्तस्यपद्मयोनेर्महात्मनः ॥ मतिरासीन्महामायांस्तोतुंनारदभ
क्तितः ॥ ३१ ॥ ॥ ब्रह्मोवाच ॥ ॥ महामायांनमस्यामिधर्मकामार्थमोक्षदाम् ॥ नंदनाद्रिकृतावासांधारिणींजगतांप्र
भुम् ॥ ३२ ॥ नारायणींभद्रकालींभद्रदांवीरवंदिताम् ॥ यज्ञाशिनींयज्ञदेहांयज्ञपालनतत्पराम् ॥ ३३ ॥ त्रिशक्तिंत्रिगुणा
रामांगुणातीतांगुणाकराम् ॥ नैमिषारण्यनिलयांमलयाचलसंश्रयाम् ॥ ३४ ॥ वीरभद्रवरांवीरांवीरासनसमास्थिताम् ॥
स्वाधिष्ठानांबुजरजःपुंजपिंजरितांबराम् ॥ ३५ ॥ शिवांसरस्वतींलक्ष्मींसिद्धिंबुद्धिंमहोत्सवां ॥ केदारावाससुभगांबदरीं
वानरप्रियाम् ॥ ३६ ॥ राजराजेश्वरींदेवींसृष्टिसंहारकारिणीं ॥ मायांमायास्थितांवामांवामशक्तिमनोहराम् ॥ ३७ ॥ मेन
कांमेरुपूज्यांचज्वालांज्वालामुखींपरां ॥ एकलिंगकृतोत्संगांनारायणपरायणाम् ॥ ३८ ॥ भागीरथींभाग्यगम्यांभोगिनीं

 यद्यदिच्छतितत्सर्वंप्राप्नोतिनैवसंशयः ॥ ९७ ॥ यथागोदानतःपुण्यंतथाचान्नप्रदानतः ॥ दीनानाथशरीरेभ्योयद्दानंसात्विकं 
मतम् ॥ ९८ ॥ अन्नदानान्महाभागसर्वदानंकनिष्ठकम् ॥ तस्मात्सर्वप्रयत्नेनअन्नंदद्यात्क्षुधावृते ॥ ९९ ॥ सर्वकालेसर्व
देशेसर्वपात्रेमहामते ॥ दद्याद्दानंपरंभक्त्यासर्वप्राणिपरायणः ॥ ९९ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायापुरीमाहात्म्ये
गोदानमाहात्म्यंनामदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ स्कंदउवाच ॥ ॥ अन्नेनचैवदत्तेनकिंनदत्तंमहीतले ॥ सर्वेषामेवदानानामन्नदानंविशिष्यते ॥ १ ॥ अत्राप्युदाहरंतीम मि
तिहासंपुरातनं ॥ आसीदिलावृतेवर्षेश्वेतोराजामहायशाः ॥२॥ गंगाद्वारेमहातेजास्तपःकर्त्तुंसमाययौ ॥ वर्षाणांनियुतंतेपे
तपःपरमदारुणम् ॥३॥तस्यवैतप्यमानस्यत्रस्तादेवाःसवासवाः ॥ वरेणछंदयामासब्रह्मातंचतपोनिधिम् ॥ ४ ॥ ॥ ब्र
ह्मोवाच ॥ ॥ वरंब्रूहिमहाभागयत्तेमनसिवांछितम् ॥ नाप्राप्यंतेमहाराजत्रिषुलोकेषुविद्यते ॥ ५ ॥ ॥ श्वेतउवाच ॥ इ
यंसर्वधराब्रह्मन्मदधीनासुराग्रज ॥ यत्किंचिद्वस्तुजातंमेसर्वंस्याद्ब्राह्मणार्थकम् ॥ ६ ॥ इदंक्षेत्रंचतेनाम्नाविख्यातंस्यान्म
हीतले ॥ तवावासश्चविष्णोश्चशिवस्यापिभवेद्वरम् ॥ ७ ॥ सर्वेषांचैवदेवानांस्थितिश्चापिप्रजायते ॥ पृथिव्यांयानितीर्था ॥२३॥
नितान्यत्रस्युःस्थिराणिभोः ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ इदंतीर्थंमहापुण्यंत्रैलोक्येचापिदुर्लभम् ॥ अतःपरंचमन्नाम्ना

विख्यातंहिभविष्यति ॥ ९ ॥ येवैस्नास्यंत्यत्रकुण्डेगच्छेयुस्तेपरंपदं ॥ यत्कर्मक्रियतेचात्रतत्सर्वंस्यादनंतकम् ॥ १० ॥ पृ
थिव्यांयानितीर्थानितानिसन्निहितानिवै ॥ भविष्यंतिमहाराजसर्वभावैरतःपरम् ॥ ११ ॥ इयंचपृथिवीसर्वासशैलवनकान
ना ॥ सप्तद्वीपासमुद्रांतामदधीनाभविष्यति ॥१२ ॥ धर्मशुद्धिर्महाराजदानबुद्धिश्चशाश्वती ॥ ब्राह्मणार्थंसमुत्पन्नोनारायण
परोभव ॥ १३ ॥ ॥ स्कंदउवाच ॥ ॥ इत्युक्त्वासहसाब्रह्माब्रह्मलोकंययौस्वकैः ॥ सोपिराजामहातेजाययौस्वेप्रवरेस्थ
नानाप्रकारान्
ले ॥ १४ ॥ जित्वाचपृथिवींसर्वांसप्तद्वीपांससागराम् ॥ स्थापयामासस्ववशेसर्वान्वैपृथिवीभुजः ॥ १५ ॥ चकारविपुलान्
यज्ञान्हयमेधादिकान्मुने ॥ स्वर्णरत्नमहार्हाणिवासांसिशयनानिच ॥ १६ ॥ ददौसविप्रवर्येभ्योवेदविद्भ्योविशेषतः ॥ वसि
ष्ठंसर्वशास्त्रज्ञंप्रोवाचतपसांनिधिम् ॥ १७ ॥ ॥ श्वेतउवाच ॥ ॥ भगवन्दातुमिच्छामिब्राह्मणेभ्योवसुंधराम् ॥ देह्यनु
ज्ञांतपोराशेशिष्यायशुभकारिणे ॥ १८ ॥ ॥ वसिष्ठउवाच ॥ ॥ अन्नदानंमहाराजसर्वकामसुखावहम् ॥ अन्नेनचैव
दत्तेनकिंनदत्तंमहीतले ॥ १९ ॥ अन्नाद्भवंतिभूतानिअन्नेप्राणाःप्रतिष्ठिताः ॥ तस्मात्सर्वप्रयत्नेनअन्नदानंददस्वभोः ॥२० ॥
॥ स्कंदउवाच ॥ ॥ किंवस्त्वन्नंविदित्वातुनोददावन्नमंबुच ॥ रत्नवस्त्रानलंकाराञ्छ्रीमंतिनगराणिच ॥ २१ ॥ दत्तवान्ब्रा
ह्मणेभ्योऽथकुंजरान्वाजिनस्तथा ॥ सुवर्णरत्नरौप्याणियागानिविविधानिच ॥ २२ ॥ अश्वमेधसहस्रैश्चइयाजबहुदक्षि

णैः ॥ स्वल्पंवस्तुपरंज्ञात्वासोन्नंतुनाददत्प्रभुः ॥ २३ ॥ एवंतस्यमहाभागदिव्यवर्षशतंययौ ॥ ततःकदाचिन्नृपतिःकालधर्म
वशंगतः ॥ २४ ॥ परलोकेवर्तमानःस्ववैश्यादिभिरावृतः ॥ क्षुधयापीडितोह्यासीत्तृषयाचनराधिपः ॥ २५ ॥ क्षुत्तृषाभ्यांपी
ड्यमानःस्वर्णभोगान्वितोऽपिसन् ॥ आनिनायाप्सरोभोगंगत्वाश्वेतंमहागिरिम् ॥ २६ ॥ ददर्शतत्रनृपतिर्दग्धंदेहंपुरात्म
नः ॥ अस्थीनिचर्वयामासशीर्णानिमुनिपुंगवः ॥ २७ ॥ चर्वयित्वापुनाराजाविमानवरमास्थितः ॥ अप्सरोगणगंधर्वसेवि
तोदिवमाव्रजत् ॥ २८ ॥ एवंसप्रत्यहंराजासंगृह्यास्थीनिसंलिहन् ॥ तत्रास्तेश्वेतसंकाशेपुनःस्वर्गंजगामह ॥ २९ ॥ अथ
कालेनमहतावसिष्ठेनमहात्मना ॥ अस्थीनिचर्वयन्दृष्टोराजाश्वेतोमहातपाः ॥ ३० ॥ उवाचप्रहसन्वाक्यंकिमहोस्वा
स्थिचर्वणम् ॥ एवमुक्तस्तदाराजाब्रह्मपुत्रेणधीमता ॥ ३१ ॥ जगादलज्जितोराजामुनिंचेदंतपोनिधिम् ॥ क्षुधामांबाधतेब्र
ह्मन्यदन्नंनपुराददम् ॥ ३२ ॥ पानंचापिमहाभागततोमांबाधतेतृषा ॥ एवमुक्तस्तदाराजाब्रह्मापुत्रोमहामुनिः ॥ ३३ ॥ पु
नर्जगादतंश्वेतंमहाराजंमहार्थवित् ॥ फलमेतन्महीशानवधारितवचोयतः ॥ ३४ ॥ अदत्तंनोपतिष्ठेतकस्यचित्किंचिदप्य
हो ॥ त्वयादत्तानिराजेंद्रस्वर्णरत्नांबराणिच ॥ ३५ ॥ तानिसर्वाणिभोगार्थंतवसंतियतःक्वचित् ॥ अन्नंपानंचनोदत्तंक्षुत्तृ
ष्णेतवसंस्थिते ॥ ३६ ॥ स्तोकंमत्वात्वयाराजन्नदत्तंचान्नपानके ॥ अदत्तंनोपतिष्ठेतसाक्षादपिप्रजापतेः ॥ ३७ ॥ ॥ श्वेतउ

जीवतेजातिरहितोगम्यागमनसंयुतः ॥ ८१ ॥ चौर्यधर्मरतश्चैवतथासीन्मुनिपुंगवः ॥ गोधनंचौर्यतोहत्वाविक्रीतेचसवैवणि
क् ॥ ८३ ॥ म्लेच्छवेश्यासमासक्तोवनांतेवसतिस्तथा ॥ वेश्याद्यूतैश्चचौरैश्चसमासक्तोऽजितेंद्रियः ॥ ८४ ॥ एकदामदिरांपी
त्वाजगामनगरेवरे ॥ ददर्शकंचिद्दातारंगांशुभांदातुमुद्यतम् ॥ ८५ ॥ तद्दृष्ट्वावणिजश्चित्तमाश्चर्यकलितंमुने ॥ विप्रान्वेदा
न्पठंतश्चधौतगात्रांश्चसुव्रतान् ॥ ८६ ॥ ऊर्ध्वपुंड्रधरान्सर्वान्प्रतिग्रहसमुद्यतान् ॥ आश्चर्यपरमोभूत्वाहसद्गोपुच्छधारिणः ॥
॥ ८७ ॥ गृहमागत्यतरसागांगृहीत्वामदालसः ॥ एकंदीनंसमानीयब्राह्मणंद्विजसत्तमं ॥ ८८ ॥ तत्कर्महसितुंचक्रेगोदानं
मंदिरश्रितः ॥ अन्येपिम्लेछजातीयाअहसंस्तंमदालसाः ॥ ८९ ॥ ब्राह्मणस्तांगृहीत्वातुययौस्वभवनंवरं ॥ प्रबुद्धोमदिरा
त्यक्तोवैश्योपिस्वस्थमानसः ॥ ९० ॥ किंकृतंकिंकृतंचैतद्यद्गौर्दत्ताद्विजातये ॥ अन्वेषयतिस्मसततंनप्रापगृहमागतः ॥ ९१ ॥
गृहेचवेश्ययावैश्योधिकृकृतोविपिनेययौ ॥ तत्रसर्पहतोविप्रवनेपंचत्वमागतः ॥ ९२ ॥ आगतायमदूताश्चनेतुंतंवणिजंखि
ला: ॥ देवदूताश्चतत्रापितस्मिन्नेवागतावने ॥ ९३ ॥ विवादश्चतथातेषांदूतानांयमदेवयोः ॥ मत्वाविकल्मषंवैश्यंनिन्युर्लो
कंप्रजापतेः ॥ ९४ ॥ अभक्त्यापिकृतंविप्रगोदानंयत्पुराशुभम् ॥ तस्मात्सवैश्चपापैर्हिनिर्मुक्तोभवबन्धतः ॥ ९५ ॥ नगोदा
नसमंविप्रपुण्यकर्ममहामते ॥ तस्मात्सर्वप्रयत्नेनगोदानंशुभमाचरेत् ॥ ९६ ॥ भूतवेतालकूष्मांडग्रहग्रस्तःसमाचरेत् ॥

मा०क्षे० ॥ क्षुन्निवृत्तिकरंचैवधेनूनांविस्तरंतथा ॥ ५२ ॥ अन्नदानात्परांतृप्तिंप्राप्यश्वेतोनराधिपः ॥ विमानवरमारुह्याप्सरोगणस मा०अ०
॥२५॥ मन्वितः ॥ ५३ ॥ सिद्धैःसंस्तूयमानोवैजगामपरमंपदं ॥ तस्मात्सर्वप्रयत्नेनअन्नदानपरोभवेत् ॥ ५४ ॥ मुष्टिमात्रमपिक्षे १२
त्रेगंगाद्वारेविशेषतः ॥ अन्नंददातिविप्रायतृप्तःस्यात्कल्पकोटिभिः ॥५५॥ अन्नदोराज्यमाप्नोतिअन्नदोगतिमुत्तमाम् ॥ त
स्मात्सर्वप्रयत्नेनशक्त्याअन्नप्रदोभवेत् ॥ ५६ ॥ इतिश्रीस्कंदपुराणेमायाक्षेत्रमाहात्म्येएकादशोध्यायः ॥ ११ ॥ ॥
॥ कार्तिकेयउवाच ॥ ॥ कुशावर्त्तंमहातीर्थंदक्षिणेब्रह्मतीर्थतः ॥ तत्रस्नात्वामहाभागनचभूयोऽभिजायते ॥ १ ॥ स्नानंदानं
जपोहोमःस्वाध्यायःपितृतर्पणम् ॥ यद्यत्रक्रियतेकर्मामुत्तस्यात्कोटिसंख्यकम् ॥ २ ॥ !क्रुद्धोमहामुनिस्तांतुयावद्भस्मीकरो
तिच ॥ तावत्सर्वेसमायाताब्रह्माद्यास्त्रिदिवौकसः ॥ ३ ॥ पुरागंगागमेमौनीदत्तात्रेयोमहातपाः ॥ तस्थावेकेनपादेनवर्षा
णामयुतंमुनिः ॥ ४ ॥ कुशचीराणिदंडंचकुंडंचोवाहजान्हवी ॥ आवर्त्तयित्वापुरतःकुशान्धृतवतीमुने ॥ ५ ॥ अयुतांतेकदा
चित्तुददर्शकुशचीरकान् ॥ वहमानांमहाभागगंगामावर्त्ततांगतां ॥ ६ ॥ तुष्टुवुःपरयाभक्त्याकार्तवीर्यगुरुंमुनिम् ॥ संस्तुतश्च
प्रसन्नोभूद्ब्रह्मादींस्तानुवाचह ॥ ७ ॥ अत्रैवभवतांस्थानंनित्यंस्यात्तीर्थकेवरे ॥ आवर्तेनयतोगंगाकुशान्धृतवतीमम ॥ ८ ॥ ॥२५॥
कुशावर्तमितिख्यातंतीर्थमेतद्भविष्यति ॥ धन्यालोकाःकरिष्यंतिस्नानंपितृसमर्चनम् ॥ ९ ॥ तत्पितॄणांचतस्यापिनस्याज्ज

न्मपुनःक्वचित् ॥ कुशावर्तेमहातीर्थेदत्तंस्यात्कोटिसंख्यकम् ॥ १० ॥ इतितेकथितोत्पत्तिःकुशावर्तस्यपुण्यदा ॥ श्रुत्वाप्येतां
महोत्पत्तिंसर्वपापैःप्रमुच्यते ॥ ११ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायापुरीमाहात्म्येद्वादशोऽध्यायः ॥ १२ ॥ ॥
॥ स्कंदउवाच ॥ ॥ ततोदक्षिणदिग्भागेविष्णुतीर्थंधनुःशते ॥ यत्रस्नात्वापरब्रह्मलीनोभवतिनिश्चितं ॥ तस्यचिन्हंप्रव
क्ष्यामियेनतज्ज्ञायतेशुभं ॥ कृष्णसर्पोमहानेकोदृश्यतेफणिमंडितः ॥ २ ॥ भाद्रकृष्णचतुर्दश्यांजलमध्येप्रयातिच ॥ तत्रस्ना
तिपुनःश्वभ्रेनिविष्टोभवतिक्षणात् ॥३॥ केनचित्कारणेनासौराजापरमधार्मिकः ॥ शप्तोदुर्वाससाविप्रपुराकृतयुगेवरे ॥ ४ ॥
॥ नारदउवाच ॥ ॥ केनवैकारणेनायंशप्तोराजामहायशाः ॥ किंनामायंकार्तिकेयकुत्रत्योऽयंनराधिपः ॥ ५ ॥ शापस्यां
तःकदैतस्यभविष्यतिमहामते ॥ अनेनकिंकृतंराज्ञातस्यदुर्वाससोमुने ॥ ६ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुनारदवृत्तांतं
राज्ञश्चापितपोनिधेः ॥ पुराकृतयुगेराजासूर्यवंशविवर्धनः ॥ ७ ॥ नाम्नाधर्मध्वजइतिख्यातोरिपुविनाशनः ॥ कृत्वाबहुवि
धान्यज्ञान्समाप्तवरदक्षिणान् ॥ ८ ॥ वनितासहितस्तत्रगंगाद्वारेसमाययौ ॥ अत्रागत्यमहातेजान्यवसद्विष्णुतत्परः ॥
॥ ९ ॥ एकदाधर्मकेतुस्तुस्नात्वागत्यग्रहेस्वके ॥ ददर्शमुनिमासीनंपीठेदुर्वाससंवरे ॥ १० ॥ दृष्ट्वातंसहसाराजापादयोःप्र
पपातह ॥ पाद्यमाचमनीयंचस्वासनंचार्घसंयुतम् ॥ ११ ॥ ददौतस्मैसमागत्यविधिदृष्टेनकर्मणा ॥ उवाचवचनंचेदंस्वागतं

मा०क्षे० तेमहामुने ॥ १२ ॥ धन्योऽस्म्यनुगृहीतोऽस्मियस्यमेगृहमागमः ॥ किमागमनकृत्यंतेकार्यंकिंकरवाणिते ॥ १३ ॥ ॥ दु मा०अ०
॥ २६ ॥ र्वासाउवाच ॥ ॥ संप्राप्तोभोक्तुकामोहंपारणस्यदिनंत्विदं ॥ शीघ्रंभोजयमांराजन्क्षुधितोऽस्मिपरंविभो ॥ १४ ॥ ॥ स्कं १३
दउवाच ॥ ॥ इतिश्रुत्वानिगदितंमुनेर्दुर्वाससोनृपः ॥ तथेत्युक्त्वाययावंतर्गृहेकर्तुंमहामुने ॥ १५ ॥ संपादयतिभोज्यंचयाव
द्राजामहामतिः ॥ शूकरास्यःसमायातोभ्रातुर्वैरमनुस्मरन् ॥ १६ ॥ विघ्नंवैकर्तुमारब्धोदृष्ट्वादुर्वाससंमुनिं ॥ सर्पोभूत्वास्व
यंरक्षएकांतेभोज्यपात्रके ॥ १७ ॥ उत्ससर्ज्जमहाक्ष्वेडंतदन्नेभक्तितोर्जिते ॥ नज्ञातंतन्महीभर्त्राकृतंयद्रक्षसामुने ॥ १८ ॥
प्रवेशयामासमुनिंभोक्तुंभोज्यंततःपरं ॥ यावदग्रेसमायातिज्ञातंतावद्विषोल्बणम् ॥ १९ ॥ विषसंवलितंदृष्ट्वाभोजनंस्वर्ण
पात्रके ॥ क्रुद्धोमुनिःसशापेनभस्मकर्तुंनराधिपम् ॥ २० ॥ यस्मात्त्वयाविषोत्सृष्टंभोज्यंमेदीयतेऽधम ॥ तस्मात्त्वंभवितादु
ष्टकालसर्पःशतंसमाः ॥ २१ ॥ उत्सृष्टंतुतदादृष्ट्वाशापाग्निंमुनिनेरितं ॥ वेपमानोमहीभर्ताभयार्तोनिजगादतं ॥ २२ ॥ ब्रह्म
न्नहंकथंशप्तोऽविचार्य्याघंममप्रभो ॥ इतिप्रोक्तोमुनिस्तेनदध्यौरक्षोविचेष्टितम् ॥ २३ ॥ ज्ञात्वालज्जासमायुक्तोदुर्वासामु
निपुंगवः ॥ उवाचतंमहाराजंकृतांजलिपुटंतदा ॥ २४ ॥ कृतमेतन्महाराजशत्रुणातवरक्षसा ॥ निवसात्रैवनृपतेविष्णुती ॥ २६ ॥
र्थेऽसुरापदे ॥ २५ ॥ अहमत्रागमिष्यामियुगांतेनरपुंगव ॥ मांदृष्ट्वासहसागंतातद्विष्णोःपरमंपदम् ॥ २६ ॥ दुःखंनात्रप्रकर्त

वाच ॥ ॥ किंकर्तव्यंमहाभागकथंनोबाधतेक्षुधा ॥ कृतांजलिरहंयाचेअदत्तंकथमाभजेत् ॥ ३८ ॥ ॥ वसिष्ठउवाच ॥
अस्त्येकंकारणंयेनजायतेतन्नसंशयः ॥ तच्छृणुष्वनरव्याघ्रकथ्यमानंमयानघ ॥ ३९ ॥ यथापुराविनीताश्वोमहीपालोमहा
शयः ॥ कृतवान्सर्वमेधांश्चसहस्राणिमहामते ॥ ४० ॥ दत्तास्तेनतथागावोरत्नस्वर्णांबराणिच ॥ स्तोकंमत्वाचतेनापिपानं
चान्नंमहीपते ॥ ४१ ॥ सोपिगंगाजलेदेहंतत्याजमुनिपालकः ॥ गतवान्ब्रह्मलोकादीन्नानाभोगसमन्वितान् ॥ ४२ ॥ त्वमि
वक्षुधयाविष्टोबभूवतृषयातया ॥ पुनर्मर्त्यंसमायातोविमानेनार्कवर्चसा ॥ ४३ ॥ गंगाद्वारेमहाक्षेत्रेनीलाभिधमहीधरे ॥
दग्धंकलेवरंसोपिदृष्ट्वाभोक्तुंमनोदधौ ॥ ४४ ॥ तावद्ददर्शहोतारंविनीताश्वःपुरोहितम् ॥ उक्तश्चकारणंविप्रःक्षुधायास्तुतपो
निधिः ॥ ४५ ॥ कथयामासतंहोताप्रतीकारंक्षुधातृषोः ॥ प्रथमातिलधेनुश्चजलधेनुस्तथापरा ॥ ४६ ॥ रसधेनुस्तृतीयातुगुड
धेनुस्तथास्मृता ॥ शर्करामधुधेनुस्तुक्षीरधेनुस्तुसप्तमी ॥ ४७ ॥ अष्टमीदधिधेनुर्वैनवनीतमयीततः ॥ तथालवणधेनुश्चसत्का
र्पासमयीतथा ॥ ४८ ॥ धान्यधेनुस्तथाप्रोक्ताद्वादशैताःप्रकीर्तिताः ॥ घटेसंस्थाप्यराजानंकारयामासतास्तथा ॥ ४९ ॥ ययौ
परमिकांसिद्धिंसर्वतृप्तिमयींप्रभो ॥ तथात्वमपिराजेंद्रकुरुष्वैतामहार्थदाः ॥ ५० ॥ तृप्तिंप्राप्स्यसिभूयिष्ठांक्षुधानोपीडयि
ष्यति ॥ अन्नदानात्परंनास्तित्रैलोक्येप्रीतिवर्धनम् ॥ ५१ ॥ ॥ स्कंदउवाच ॥ ॥ वसिष्ठोपिमहाभागकारयामासराजतः

[आकाशवाणी]

कानांराज्यंनिहतकंटकम् ॥ ८ ॥ श्रुत्वातद्वचनंतत्रपुनःप्रोचेऽशरीरणी ॥ धन्योसिदानवश्रेष्ठयस्यतेमतिरीदृशी ॥ ९ ॥
तपसातवसंतुष्टोविष्णुस्तेस्थानमेष्यति ॥ पुत्रौद्वौभवितारौतेतयोरेकस्तुवंशधृक् ॥ १० ॥ तपसाहतपापस्त्वंविष्णोश्चैव
प्रसादतः ॥ अंतेचपरमंस्थानंयास्यतियोगिदुर्लभम् ॥ ११ ॥ इतितद्वचनंश्रुत्वातटोनामतपोनिधिः ॥ तत्रैवनिवसन्सोपि
विष्णुपूजनतत्परः ॥ १२ ॥ कालखंजसुतांप्रापविवाहविधिनाततः ॥ द्वौपुत्रौसमयेप्रापसूकरास्यगजाननौ ॥ १३ ॥ रा
क्षसींबुद्धिमापन्नौपीडयामासतुर्मुनीन् ॥ खादयामासतुःकांश्चित्कांश्चिज्जग्राहलोमसु ॥ १४ ॥ पाटयामासतुःकांश्चिच्चक्र
तूरुधिराशनम् ॥ एवं पीडयतोर्विप्रमुनीन्राक्षसयोस्तयोः ॥ १५ ॥ मुनयस्त्रासमापन्नाराजानंशरणंययुः ॥ धर्मध्वजमहा
राजंत्राहित्राहीतिवादिनः ॥ १६ ॥ ऊचुःप्रांजलयःसर्वेसूकरास्यभयार्दिताः ॥ त्राहिनोरक्षसोवीरतेवयंशरणंगताः ॥
॥ १७ ॥ इतितेषांवचःश्रुत्वाधर्मात्मासत्यसंग्रहः ॥ माभैष्टइतिप्रोवाचसंपूज्यचयथार्हतः ॥ १८ ॥ यत्रासातेमहाभागराक्ष
सौकामरूपिणौ ॥ आह्वयामासतौवीरोधर्मकेतुरभीरिपुः ॥ १९ ॥ श्रुत्वाकोलाहलंतस्यरक्षस्याययतुःक्षणात् ॥ रक्तेक्षणौ
रक्तकेशौरक्तमाल्यानुलेपनौ ॥ २० ॥ बृहद्दन्तौबृहत्कायौघोरौभीरुभयानकौ ॥ दृष्ट्वातौयुयुधेराजाधर्मात्मासत्यसंगरः ॥ ॥ २७ ॥
॥ २१ ॥ नाराचैरसिभिश्चैवगदाभिर्मुशलैस्तथा ॥ वृक्षैर्महीधरशृंगैःक्षेपणीयाश्मसंग्रहैः ॥ २२ ॥ युध्यतांतुमुलःशब्दःशु

श्रुवेगिरिकंदरे ॥ अश्मनांचर्मणांचैवशूलानामसिनांतथा ॥ २३ ॥ एतस्मिन्नंतरेराजागजास्यंवासजालकैः ॥ छादयामास
सहसाव्याकुलोऽभूच्चराक्षसः ॥ २४ ॥ ततोर्द्धचंद्रबाणेनशिरश्चिच्छेदरक्षसः ॥ पपातसहसाभूमौवज्राहतइवाचलः ॥ २५ ॥
अलकनंदोत्तरेतीरेक्षेत्रेश्रीसंज्ञकेशुभे ॥ तन्मांसास्थिमयोविप्रपर्वतोदृश्यतेमहान् ॥ २६ ॥ गजाचलइतिख्यातस्तत्रास्तेब्र
ह्मपुत्रक ॥ शूकरास्योपितंदृष्ट्वाकर्मराज्ञोमहोल्बणम् ॥ २७ ॥ ययौकैलासनिलयेमहादयांभयान्वितः ॥ गजास्योदिव्य
मापन्नोदेहंवैमानिकैर्युतम् ॥ २८ ॥ ययौपरमिकांसिद्धिंमरणाद्धिहिमालये ॥ अज्ञानादपियद्रक्षोनेकब्रह्मवधाधिकम् ॥
॥ २९ ॥ संप्राप्यपरमंस्थानंयत्सुरैरपिदुर्लभम् ॥ इतितेकथितंसर्वंयत्पृष्टोऽहंत्वयाद्विज ॥ ३० ॥ श्रुत्वाधर्मध्वजस्येदमुपा
ख्यानंसुपुण्यदम् ॥ मुच्यतेसर्वपापेभ्यःसत्यमेतन्नसंशयः ॥ ३१ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायाक्षेत्रमाहात्म्येध
र्मध्वजोपाख्यानंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ स्कंदउवाच ॥ ॥ अन्यानितीर्थवर्याणिसर्वपापहराणिवै ॥ कथयामिशृणुप्राज्ञगंगायांनारदाधुना ॥ १ ॥ गंगायाःप
श्चिमेतीरेकुशावर्तादधःशरे ॥ सप्तसामुद्रिकंनामतीर्थंपरमपावनम् ॥ २ ॥ यत्रस्नात्वामहाभागकैलासनिलयेवसेत् ॥ तत्र
बिल्वेश्वरोनाममहादेवोविमुक्तिदः ॥ ३ ॥ यस्तत्रनियताहारःशिवलोकेमहीयते ॥ पुरातत्रसमुद्रैश्चाराधितोभगवाञ्छिवः

॥ ४ ॥ समुद्रेश्वरोमहादेवःसर्वकामफलप्रदः ॥ ततोवैदक्षिणेभागेस्वर्णचिन्हेश्वरःस्थितः ॥ ५ ॥ सकृद्दृष्ट्वातुतंदेवंसर्वपापैः
प्रमुच्यते ॥ ततोर्द्धक्रोशखंडेवैशिवतीर्थमितिध्रुवम् ॥ ६ ॥ तत्रस्नात्वामहाभागकैलासनिलयेवसेत् ॥ तत्रबिल्वेश्वरोनाम
महादेवोविमुक्तिदः ॥ ७ ॥ यस्तत्रनियताहारःसप्तरात्रंजितेंद्रियः ॥ जपतेशिवमंत्रंचरुद्रंचागमतत्परः ॥८॥ परांसिद्धिमवा
प्नोतियासुरैरपिदुर्लभा ॥ बिल्वपत्रैस्तमभ्यर्च्यनभूयःस्तनपोभवेत् ॥ ९ ॥ ततःशरद्वयेतीरेगंगायाःशुभदायके ॥ तीर्थंगा
णेश्वरंनामसर्वपापप्रणाशनम् ॥१०॥ तत्रस्नात्वामहाभागसर्वपापैःप्रमुच्यते ॥ यस्तत्रकुरुतेपिंडदानंपितॄनिमित्तकम् ॥११
दशवारंकृतंतेनगयाश्राद्धंनसंशयः ॥ ततःपश्चिमदिग्भागेशिलापरमपावनी ॥१२॥ नाम्नानारायणीख्यातासर्वपापप्रणाश
नी ॥ यस्तत्रकुरुतेश्राद्धंश्रद्धाभक्तिसमन्वितः ॥१३॥ पितृवंश्याःशतंमातृवंश्याश्चापितथास्वयम् ॥ तारिताःपितरस्तेनसत्यं
सत्यंनसंशयः ॥१४॥ गंगायाःपूर्वदिग्भागेपार्वतीश्वरसंज्ञितः ॥ पार्वत्यायत्रनितरांपूजितोभगवाञ्छिवः ॥१५॥ यस्यदर्श
नमात्रेणसर्वपापैःप्रमुच्यते ॥ गंगातोदंडशतकेशिवःपरमपावनः ॥१६ ॥ यद्दर्शनात्पूजनाच्चसर्वान्कामानवाप्नुयात् ॥ नील
पर्वतप्राग्भागेधारासारवतीस्थिता ॥१७॥ तस्यांस्नात्वातथाचम्यब्रह्मलोकमवाप्नुयात् ॥ यत्रैषासंगताविप्रगंगायाःपापना ॥ २८ ॥
शिनी ॥१७॥ पार्वतीतीर्थमाख्यातंसर्वपापप्रणाशनम् ॥ तस्यचिन्हंप्रवक्षामियेनतज्ज्ञायतेशुभं ॥१८॥ मृत्तत्रकुंकुमारक्ता

व्यंशापांतोभवितातव ॥ प्रिययासहितोविष्णोःसायुज्यंप्राप्स्यसेऽचिरात् ॥ २७ ॥ इयंचापिमहाभागसर्पिणीभविताख
लु ॥ गायनार्थेस्वजातेश्चमाशोचस्त्वंमहीपते ॥ २८ ॥ गंगाद्वारंपरंक्षेत्रंयत्रब्रह्मादयःसुराः ॥ निवसंतिविमुक्त्यर्थेयेनकेना
पियोनिना ॥ २९ ॥ खेदस्त्वयानकर्तव्योभुजंगमशरीरतः ॥ ज्ञानंचभवितातत्रमोक्षमार्गप्रदर्शकम् ॥ ३० ॥ इत्युक्त्वाप्रय
यौविप्रोबदरीविपिनेततः ॥ सोऽपिराजामहाबाहुःसर्पदेहोऽभवन्मुने ॥ ३१ ॥ सपत्नीकोमहाभागहरिद्वारेसुरालये ॥ ३२ ॥
इतिश्रीस्कंदपुराणेकेदारखंडेगंगाद्वारमाहात्म्येविष्णुतीर्थप्रशंसननामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ सूकरास्योमहाभागकोवासीद्राक्षसाधमः ॥ अस्यभ्रातापिकोवासीत्किमर्थंनृपरक्षसोः ॥ १ ॥ अभू
द्वैरंकदादेवसर्वंमेविस्तराद्वद ॥ कुत्रैतयोस्तुसंस्थानंकिंकृतंरक्षसापुरा ॥ २ ॥ ॥ स्कंदउवाच ॥ ॥ आसीद्दनुकुलेविप्रत
टोनामासुराधिपः ॥ सैकदाहिमवत्पार्श्वेदक्षिणेमुनिसेविते ॥ ३ ॥ पिंडारकनदीतीरेतपःपरमदारुणम् ॥ तपस्तेपेनिराहा
रोवर्षाणामयुतंकिल ॥ ४ ॥ तस्यवैतपसात्रस्तास्त्रयोलोकाःसवासवाः ॥ अथाशरीरिणीवाणीमाकाशेह्यशृणोत्ततः ॥ ५ ॥
साधुसाधुतटसाधुदुर्धर्षतपउत्तमम् ॥ किंकृत्यंतेहितपसात्रैलोक्येनास्तिदुर्लभम् ॥ ६ ॥ इतिश्रुत्वातटोवाणींजगादवचनं
त्विदम् ॥ यदिवैमेतपस्तप्तंततःस्यांविष्णुभक्तियुक् ॥ ७ ॥ विष्णुभक्तिविहीनानांमुक्तिःस्वप्नेपिदुर्लभा ॥ नोकांक्षेपितृलो

हत्यादिकोटयः ॥ नश्यंतिकिंपुनर्विप्रस्नानात्पानाच्छिवार्चनात् ॥ ३४ ॥ यत्रब्रह्मादयोदेवाःपुराशिवमतोषयन् ॥ नाम्नाच
क्रुर्नदींरम्यांपुण्यांशंकरवल्लभां ॥ ३५ ॥ गंगायांसंगमोयत्रतीर्थंपरमपावनम् ॥ शांकरंमुक्तिदंनृणांब्रह्महत्यानिवारकम् ॥
॥ ३६ ॥ शंकरेशोमहादेवोऽखिलसिद्धिमनोहरः ॥ यस्यदर्शनमात्रेणशतजन्मार्जितैरपि ॥ ३७ ॥ मुच्यतेसर्वपापैस्तुकल्पं
शिवपुरेवसेत् ॥ महापुण्यतमंपीठंसद्यःप्रत्ययकारकम् ॥ ३८ ॥ यद्यत्रकुरुतेकर्मतत्तत्कोटिगुणंभवेत् ॥ वीरभद्रेश्वराद्देवात्प
श्चिमेयोजनार्द्धके ॥ ३९ ॥ शालिहोत्रेश्वरोदेवोमहादेवोवरप्रदः ॥ शालिहोत्रोमुनिर्यत्रशिवसंन्यस्तमानसः ॥ ४० ॥ ब
भूवनियताहारस्तथावर्षसहस्रकम् ॥ लेभेविद्यामहादेवादष्टादशमहामुने ॥ ४१ ॥ शालिहोत्रेश्वरंदेवंपूजयित्वाविधानतः
॥ मूढोपिमंडलाद्यातिसर्वविद्यांयथामुनिः ॥ ४२ ॥ तस्मात्पूर्वेक्रोशपादेनदीरंभाभिधानतः ॥ यत्ररंभानिवासितुंमायापुर्य्यां
सरिद्वपुः ॥ ४३ ॥ एकदास्वर्गभुवनेनृत्यंतीवासवालये ॥ ददर्शविष्णुदूतैस्तुनीयमानान्मृतान्शुभे ॥ ४४ ॥ मायाक्षेत्रेकृता
वासान्वैकुंठंप्रतिगच्छतः ॥ उपास्यमानान्देवाद्यैरिंद्राद्यैर्गणकिन्नरैः ॥ ४५ ॥ चतुर्भुजान्शंखचक्रगदापाणीन्हरीनिव ॥
पीतांबरान्सलक्ष्मीकांस्तथाश्रीवत्सलांछनान् ॥ ४६ ॥ विभूतिभिःशोभमानान्गरुडस्थान्सुवर्चसः ॥ इतितान्मुक्तिमाप ॥२१॥
न्नान्दृष्ट्वाश्चर्यमवापसा ॥ ४७ ॥ प्रोवाचशक्रंदेवेशंतदातीर्थार्थमुत्थितम् ॥ त्रैलोक्यनाथभगवन्कएतेसूर्यवर्चसः ॥ ४८ ॥ हर

योवानंतरूपधराबुधगणेश्वराः ॥ कुतःसमागताह्येतेक्वप्रयांतिचसेविताः ॥ ४९ ॥ ॥ इंद्रउवाच ॥ ॥ प्रियेह्येतेमहात्मानो
मायाक्षेत्रनिवासिनः ॥ मृतागच्छंतिपरमंतद्विष्णोःपरमंपदम् ॥ ५० ॥ मायाक्षेत्रसमंपुण्यंपृथिव्यांनैवविद्यते ॥ तिस्रः
कोट्योऽर्द्धकोटीनांवायौवायुरथाब्रवीत् ॥ ५१ ॥ तानिसर्वाणितन्वंतिमायाक्षेत्रेनसंशयः ॥ वयंचसर्वेतत्रैववसामोमुक्ति
लालसाः ॥ ५२ ॥ ॥ रंभोवाच ॥ ॥ अहमत्रवसेयंवैयथाज्ञापयवासव ॥ भविष्यामियथाद्योतेकृपांकुरुमयिप्रभो
॥ ५३ ॥ ॥ इंद्रउवाच ॥ ॥ सरिद्भूत्वावरारोहेनित्यंतिष्ठवरानने ॥ पुण्येतवजलेयेवैस्नातारःपरगामिनः ॥ ५४ ॥ ॥ स्कं
दउवाच ॥ ॥ इतिश्रुत्वावचोभर्तुःप्रणिपत्यत्वरान्विता ॥ आययौपरमेपुण्येमायाक्षेत्रेसरिद्वरा ॥ ५५ ॥ जातापुण्यतमावि
प्रसर्वपापप्रणाशिनी ॥ रंभाकुंडंचगंगायाःसंगमेपुण्यदायके ॥ ५६ ॥ उपस्पृश्यापिपानीयंरंभयासहमोदते ॥ रंभेश्वरो
महादेवस्तत्रैवशिवदायकः ॥ ५७ ॥ ततःपरमहाभागकुब्जाम्रकमितिस्मृतम् ॥ यत्राम्रेकुब्जरूपेणदृष्टोमुनिभिरच्युतः
॥ ५८ ॥ ततःकुब्जाम्रकंतीर्थंसर्वपापप्रणाशनम् ॥ सकृद्दृष्ट्वातुयत्क्षेत्रंपरब्रह्मणिलीयते ॥ ५९ ॥ इतितेकथितंविप्रगंगाद्वार
स्यवैभवम् ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ६० ॥ श्राद्धेश्रृणोतियोमर्त्योगंगाद्वारस्यवैभवम् ॥ पितरस्तस्य
गच्छंतितद्विष्णोःपरमंपदम् ॥ ६१ ॥ यःपठेन्मानवोभक्त्याश्रृणुयाद्वापिभक्तितः ॥ सयातिपरमंस्थानंयत्रदेवोमहेश्वरः

निकट

॥ ६२ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायाक्षेत्रमाहात्म्येगंगाद्वारमाहात्म्यंनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ कुब्जाम्रकंमहातीर्थंवदविस्तरतोमम ॥ यथेदंचसमुत्पन्नंयथापुण्यंहिचाभवत् ॥ १ ॥ केनकेनतपस्त
प्तंकेचापुःपरमांगतिम् ॥ कानितीर्थानिचैवात्रकियन्मानंसुपुण्यदं ॥ २ ॥ एतत्सर्वंसमासेनविस्तराद्वदमेप्रभो ॥ त्वत्समोना
स्तित्रैलोक्येभक्तवत्सलतांगतः ॥ ३ ॥ ॥ स्कंदउवाच ॥ ॥ शृणुनारदतत्त्वेनगुह्यंक्षेत्रंपरंहरेः ॥ यस्यश्रवणमात्रेणश
तजन्मसमुद्भवैः ॥ ४ ॥ मुच्यतेसर्वपापैश्चविष्णुलोकंचगच्छति ॥ सांनिध्यंयत्रविष्णोर्हिनित्यंतिष्ठतिनारद ॥ ५ ॥ पुरादेश
प्लवेप्राप्तेयुगेयोगींद्रमाधवः ॥ मायांस्वीयांप्रतिष्ठोपिदृष्ट्वाचैकार्णवींमहीम् ॥ ६ ॥ मधुकैटभौदुरात्मानौनिजकर्णमलोद्भवौ ॥
बाधयंतौचब्रह्माणंत्रैलोक्यंक्षेप्तुमुद्यतौ ॥ ७ ॥ हत्वातौहिदुराधर्षौरचयित्वाचमेदिनीं ॥ मेदसादुष्टयोश्चैवब्रह्मणोवचनोदितः
॥ ८ ॥ जगामशतशोविप्रक्षेत्राणिधरणीतले ॥ द्रष्टुंभक्तान्स्वकीयांश्चगंगाद्वारमुपागमत् ॥ ९ ॥ यत्ररैभ्योमहातेजाउग्रेतप
सिसंस्थितः ॥ दशवर्षसहस्राणितथाऊर्द्ध्वकरोमुनिः ॥ १० ॥ ततोवर्षसहस्रंवैवायुभक्षोमहातपाः ॥ शैवालभक्षणंपंचशतव
र्षाणिनारद ॥ ११ ॥ इतिवैतप्यमानस्यरैभ्यस्यमुनिपुंगव ॥ आम्रंवृक्षंसमासाद्यकुब्जरूपेणमाधवः ॥ १२ ॥ दर्शयामास ॥ ३० ॥
भगवान्दर्शनंमुक्तिकारणम् ॥ सोऽपिरैभ्योमहाभागतंदृष्ट्वाजगतांपतिं ॥ १३ ॥ जानुभ्यामवनींस्पृष्ट्वयनत्वापुनरुदारधीः ॥

तथारक्तशिलार्त्तिहा ॥ यस्तांभालेनरःकुर्याद्गौरीलोकेमहीयते ॥ १९ ॥ तयामृत्तिकयायस्तुपूजयेद्विश्वनायकम् ॥ सर्वसिद्धिमवा
प्नोतियातिब्रह्मसनातनम् ॥ २० ॥ यस्तयापूजयेल्लिंगसहस्रंवेदमंत्रकैः ॥ प्राप्नोतिसकलांसिद्धिंमहादेवप्रसादतः ॥ २१ ॥
तस्मात्क्रोशार्द्धकेतीर्थंगंगायांभैरवाश्रितम् ॥ पुरायत्रमहादेवोभैरवेनसमर्चितः ॥ २२ ॥ आपदुद्धारणोनामसर्वापत्तिविना
शनः ॥ तंपूज्यविधिवद्भक्त्यापूजितोनीललोहितः ॥ २३ ॥ तत्रयातिनदीश्रेष्ठानाम्नाभानुर्भवाशिनी ॥ तत्संगमेनरःस्नात्वा
सूर्यलोकेमहीयते ॥ २४ ॥ गंगायादक्षिणेतीरेमानेक्रोशात्मकेमुने ॥ पुरुहूतेश्वरोनाममहादेवोवरप्रदः ॥ २५ ॥ यस्यदर्श
नमात्रेणमहापातककोटयः ॥ ब्रह्महत्यासहस्राणिनाशमीयुर्महामुने ॥ २६ ॥ तत्रैकाजलमध्येतुपीतवर्णाशिलास्तिहि ॥
नाम्नादेवेश्वरीप्रोक्तासर्वपापप्रणाशिनी ॥ २७ ॥ गंगाद्वारोत्तरेभागेगंगायाःप्राग्विभागके ॥ नदीकौमुद्वतीख्यातासर्वदारि
द्र्यनाशिनी ॥ २८ ॥ धनार्थंयेमहाभागस्नानंकुर्वंतिभक्तितः ॥ लभंतेसप्तरात्रेणधनंदारिद्र्यनाशनम् ॥ २९ ॥ ततोवैपश्चिमे
तीरेधारापरमपावनी ॥ गंगायांसंगमेयत्ररेणुकानामनामतः ॥ ३० ॥ तत्रस्नात्वाचजह्नवाचफलानंत्यंलभेन्नरः ॥ ततःक्रोशा
र्द्धखंडेवैनदीवज्रशिलाकिल ॥ ३१ ॥ तस्यांस्नात्वानरोभक्त्याप्राप्नोतिरविमंडलम् ॥ यस्तत्रकुरुतेश्राद्धंभक्त्यायुक्तोमहामु
ने ॥ ३२ ॥ पितरस्तस्यगच्छंतिस्थानंसप्तोत्तरंशुभम् ॥ ततःसौम्येर्द्धगव्यूतौनदीशंकरवल्लभा ॥ ३३ ॥ यदंबुस्पर्शमात्रेणब्रह्म

र्वासांदिव्यरूपाणांभवंत्यप्सरसांगणाः ॥ ददामितेवरंचैववरैभ्ययत्तेविचिंतितम् ॥ २९ ॥ ॥ रैभ्यउवाच ॥ ॥ धन्योस्मि
कृतकृत्योस्मियस्यत्वंदृष्टिगोचरः ॥ नचाहंकांचनंगावोनस्त्रियोराज्यमेवच ॥ ३० ॥ नोकांक्षेजगतांनाथत्वत्कृतांप्रार्थयेहंवि
भो ॥ यदिप्रसन्नोभगवाँल्लोकनाथोजनार्दनः ॥ ३१ ॥ तवचात्रनिवासंवैनित्यमिच्छामिमाधव ॥ यावल्लोकाधरिष्यंतिताव
त्तवममप्रभो ॥ ३२ ॥ स्थानंतवममस्थानंतवनामामृतंभजे ॥ भक्तिश्चस्याद्रमानाथतवपादांबुजद्वये ॥ ३३ ॥ ॥ स्कंद
उवाच ॥ ॥ रैभ्यस्यैवंवचःश्रुत्वाभगवान्भूतभावनः ॥ बाढमित्येवविप्रेंद्रसर्वमेतद्भविष्यति ॥ ३४ ॥ यस्मादाम्रंसमाश्रि
त्यकुब्जरूपेणवैत्वया ॥ दृष्टोस्मिरैभ्यतस्माद्वैकुब्जाम्रकमितिस्फुटम् ॥ ३५ ॥ तीर्थमेतन्महापुण्यंभविष्यत्यभिधानतः ॥
अस्मिन्क्षेत्रेऽपियेमर्त्याःस्नानंदानंजपादिकम् ॥ ३६ ॥ भविष्यतिमहाभागतत्सर्वंकोटिसंख्यकम् ॥ करिष्यंतिनिवासंच
तीर्थेऽस्मिन्प्रवरेनराः ॥ ३७ ॥ प्राप्स्यंतिपरमंस्थानंपुनरावृत्तिदुर्लभम् ॥ पापिनश्चात्रविप्रेंद्रमृताविष्णुमवाप्नुयुः ॥ ३८ ॥
पितरस्तस्यहृष्यंतियस्यास्मिन्क्षेत्रकेस्थितिः ॥ येपिबिंदुप्रमाणंवैदद्युस्तिलमनुत्तमम् ॥ ३९ ॥ पितृभ्यस्तारितास्तेनसं
सारात्पितरोमुने ॥ परमाणुप्रमाणंचयेऽत्रदद्युर्हिरण्यकम् ॥ ४० ॥ तेनदत्तंभवेद्विप्रसहस्रंपरिसंख्यया ॥ येऽत्रदद्युर्महाभा ॥ ३१ ॥
गवासोगोभूषणादिकम् ॥ ४१ ॥ दत्तंतेनभवेदेवसर्वंवस्तुमहामुने ॥ कुब्जाम्रकेमहातीर्थेवसामिरमयासह ॥ ४२ ॥ हृषी

कानिपुराजित्वाईशःसंप्रार्थितस्त्वया ॥ यद्वाहंतुहृषीकेशोभवाम्यत्रसमाश्रितः ॥ ४४ ॥ तुर्योभागोमदीयोवैभविष्यतिसहा
ग्रजः ॥ शंकरःशंकरःसाक्षात्पुनर्मांस्थापयिष्यति ॥ ४५ ॥ कलौमांभरतंनामवदिष्यंतिमहीतले ॥ कृतेवाराहरूपेणत्रेता
यांकृतवीर्यजम् ॥ ४६ ॥ द्वापरेवामनंदेवकलौभरतमेवच ॥ नमस्यंतिमहाभागभवेयुर्मतिभागिनः ॥ ४७ ॥ इत्युक्त्वाभग
वान्विष्णूरैभ्यंनामतपोनिधिम् ॥ तत्रांतर्द्धानमापन्नःपश्यतस्तस्यनारद ॥ ४८ ॥ इतितेकथितोत्पत्तिःक्षेत्रकुब्जाम्रकस्य
हि ॥ श्रुत्वेमांसर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ ४९ ॥ इ०स्कं०के०मायापुर्यांकुब्जाम्रकमाहात्म्यंनामषोडशो०॥१६॥
॥ नारदउवाच ॥ ॥ कियन्मानंपरंक्षेत्रंकानितीर्थानितत्रवै ॥ किंतत्रपुण्यंलभतेस्नानाद्दानात्तथार्चनात् ॥ १ ॥ उत्पत्तिंचैव
माहात्म्यंसर्वंविस्तरतोवद ॥ केनकेनफलंप्राप्तमत्रक्षेत्रेशिवात्मज ॥ २ ॥ केकेपरांगतिंप्राप्ताहृषीकेशाश्रमात्तथा ॥ सर्ववि
स्तरतोब्रूहिश्रोष्यमाणायमेप्रभो ॥ ३ ॥ ॥ स्कंदउवाच ॥ ॥ साधुपृष्टंत्वयाविप्रकुब्जाम्रकसुतीर्थकम् ॥ सुंदेश्वरींस
मारभ्ययावद्धेमवतीनदी ॥ ४ ॥ तावत्कुब्जाम्रकंक्षेत्रंपापिनामपिमुक्तिदम् ॥ करमानेस्थलेतत्रतीर्थानांपंचकंध्रुवम् ॥ ५ ॥
तत्रापिविप्रश्रेष्ठानिस्वच्छोदान्यपिदर्शनात् ॥ शृणुतीर्थानिपुण्यानिमुक्तिदानिपरात्मनाम् ॥ ६ ॥ मायातीर्थंपरंख्यातंय
त्रदृष्टोजनार्दनः ॥ गंगाचयमुनाचापिद्वयंयत्रसमास्थितम् ॥ ७ ॥ तस्मिन्कृतोदकोविप्रतारयेत्कुलसप्तकम् ॥ सकृत्स्नातो

ऽपिभवनंकुबेरस्यलभेन्मुने ॥ ८ ॥ शृणूत्पतिंप्रवक्ष्यामिमायातीर्थस्यनारद ॥ सर्वपापहरांदिव्यांमोक्षमार्गानुदर्शिनीम् ॥
॥ ९ ॥ पुराकृतयुगेविप्रःसोमशर्मेतिविश्रुतः ॥ तपस्वीनिरपेक्षश्चसत्यवादीजितेंद्रियः ॥ १० ॥ तपस्तेपेसपरमंजितात्मासु
प्तिवर्जितः ॥ ग्रीष्मेपंचतपाश्चैववर्षासुवृष्टिसाहकः ॥ ११ ॥ हेमंतेजलधाराभिःसिच्यमानःसमंततः ॥ इतिवर्षसहस्त्रंवैततो
भूदूर्ध्वबाहुकः ॥ १२॥ एकपादेनतस्थौचशिलायांनियतासनः॥सहस्त्रद्वितयंतस्ययया वेवंमहामते॥१३॥वायुभक्षःसहस्त्रंवै
सहस्त्रंह्यूर्ध्वपादकः ॥ एवंवैतप्यमानस्यप्रसन्नोऽभूज्जनार्दनः ॥१४॥ ॥ श्रीभगवानुवाच ॥ साधुसाधुमहाभागसोमशर्मन्
द्विजोत्तम ॥ वरंवरयभद्रंतेयदास्त्यभिमतंतव ॥ १५ ॥ प्रसन्नोऽस्मिनसंदेहस्तपसानेनसुव्रत ॥ दुर्लभंतवविप्रेंद्र नास्तित्रै
लोक्यमंडले ॥ १६ ॥ सोमशर्मोवाच ॥ यदीच्छसिवरंदातुंप्रसन्नोयदिवैमयि ॥ जानीयांतवमायांहित्रैलोक्यंमोहितंयया
॥ १७॥ ॥ श्रीभगवानुवाच ॥ ॥ ममममायामहाभागनजानंतिदिवौकसः ॥ ब्रह्मायया पुरासृष्टःसामायाममकीर्तिता ॥
॥ १८ ॥ वर्षंतिचमहामेघाःसामायाममकीर्तिता ॥ ययानिर्जलतांयांतिसामायाममकीर्तिता॥१९॥चंद्रोयद्धीयतेपक्षेपक्षेपूर्ण
त्वमेतिच ॥ मायैषाममविप्रेंद्रग्रहनक्षत्रतारकाः॥२०॥हेमंतेयच्चसलिलंकूपेकोष्णंविभातिच ॥ शीतलंचतथाग्रीष्मेसामायाम ॥३२॥
मकीर्तिता ॥ २१ ॥ उदेतिसविताप्राच्यांप्रतीच्यामस्तमेतिच ॥ शोणितंचतथारेतःसंयुक्तंस्यान्महामते ॥ २२ ॥ गर्भेचोत्पद्य
सूर्यः रक्त वीर्यः

प्रोवाचमधुरंवाक्यंप्रसादार्थीमहायशाः ॥ १४ ॥ ॥ रैभ्यउवाच ॥ ॥ नमःकमलनाभायविष्णवेप्रभविष्णवे ॥ सुनंदा
यसुभद्रायदुराधर्षायतेनमः ॥ १५ ॥ हिरण्यबाहवेतुभ्यंहिरण्याक्षविमर्दिने ॥ हिरण्याक्षायविभवेहिरण्यसमतेजसे ॥१६॥
हिरण्यपशुहंत्रेतेहिरण्यपशुमर्दिने ॥ नमोहिरण्यनाभायहिरण्यचारुरूपिणे ॥ १७ ॥ हरिताश्वायहरयेहारितांगायहारि
णे ॥ हयग्रीवायहेयायपरायपरमात्मने ॥ १८॥ अहंकारविमुक्तायहेमसंस्थायहारिणे ॥ नमोहरिणनेत्रायनमस्तेहरिबा
हवे ॥ १९ ॥ नमोहिरण्यगर्भायहृषीकेशायतेनमः ॥ हविषेहविराशायबर्हिपत्रायवर्चिषे ॥ २० ॥ हेमांगदायबुद्धायहिमा
द्रिप्रकृतौकसे ॥ हिमाद्रितनयेशायहृदयस्थायहुंकृते ॥ २१ ॥ हेयाहेयविहीनायसर्वेषांपतयेनमः ॥ हृषीकेशाश्रमस्थायही त्याज्यत्रत्याज्य विहीनाय
रकाक्षायतेनमः ॥ २२ ॥ हस्तिमस्तकसंस्थायबहुहस्तायतेनमः ॥ सहस्त्रहस्तरूपायसहस्त्रकरमर्द्दिने ॥ २३ ॥ सहस्त्रर
श्मिरूपायसहस्त्रफणरूपिणे ॥ सहसाकृतकार्यायसहसाभक्तभाविने ॥ २४ ॥ ॥ स्कंदउवाच ॥ ॥ इतिस्तुतोमहावि
ष्णुस्तेनरैभ्येणधीमता ॥ उवाचमधुरंवाक्यंविनयावनतास्थितम् ॥२५॥ श्रीभगवानुवाच ॥ ॥ वरंवरयभद्रंतेतवयद्धृदिव
र्तते ॥ किंचैवकांचनंगावःकिंवाराज्यमकंटकम् ॥ २६ ॥ अथवेच्छसिवास्थानंयत्रतेचाप्सरोगणाः॥ अथवेच्छसिविप्रेंद्र
ऋषीणामुत्तमोमुनिः ॥ २७ ॥ अथवेछसिकन्यानांसहस्त्रंदिव्यमद्भुतम् ॥ धनरत्नसमृद्धानांहेमभांडविभूषितम् ॥ २८ ॥ स

॥ ३७ ॥ पुनस्तयैवचौषध्यानाशमेतितदैवहि ॥ आयुःक्षयपरिज्ञानंसर्ववीर्यंहराम्यहम् ॥ ३८ ॥ जायमानोल्पतनुकोयौव
नेचतथामहान् ॥ अवस्थायांतृतीयायांजराव्याप्तश्श्लथस्तथा ॥ ३९ ॥ पश्चादिंद्रियनाशश्चसर्वंमायाबलंमम ॥ अणुमात्रे
ऽश्वत्थबीजेवापितेंऽकुरसंभवः ॥ ४० ॥ पुनःपत्रादिकोत्पत्तिस्तथाशाखाप्रशाखिकाः ॥ जायंतेमाययाविप्रपुनर्बीजंतथांकु
रः ॥ ४१ ॥ योसौविभूतिमाञ्जंतुर्दरिद्रश्चतपोधनः ॥ मायामेतामहंकृत्वापोषयामिदिवौकसः ॥ ४२ ॥ ब्रह्मासृजतिलोकं
हिइतिसर्ववदंतिहि ॥ मायामयंवपुःकृत्वात्वहमेवसृजामिवै ॥ ४३ ॥ लोकावदंतिशक्रोयंदेवान्पालयतिध्रुवम् ॥ अहमेवेंद्र
वपुषापालयामिदिवौकसः ॥ ४४ ॥ माययायमरूपेणनाश्यतेचमयाजगत् ॥ कौबेररूपमास्थायधनानांरक्षितास्म्यहम्
॥ ४५ ॥ इंद्रमायांसमाश्रित्यवृत्रोमेनाशितःपुरा ॥ रुद्रमायांसमाश्रित्यत्रिपुरोनाशितोमया ॥ ४६ ॥ वायुमायांसमाश्रि
त्यप्राणिनांदेहसंस्थितः ॥ जाठराग्निरहंभूत्वाप्राणिनांदेहमाश्रितः ॥ ४७ ॥ चतुर्विधंपचाम्यन्नंमायैषाममकीर्तिता ॥ वाड
वंरूपमास्थायसामुद्रंजलमन्वहम् ॥ ४८ ॥ पिबामिमाययाविप्रसमुद्रेकृतसंस्थितिः ॥ सामुद्ररूपमास्थायसंधरामिजग
द्धिः ॥ ४९ ॥ लोकानाश्रित्यभूरादीञ्जगद्रूपोऽस्मिमायया ॥ सौरींमायांसमाश्रित्यसंतपामिजगत्त्रयम् ॥ ५० ॥ मायां ॥३३॥
मेघमयींकृत्वासंधरामिजलंतथा ॥ राजमायांसमाश्रित्यपालयामिस्वमायया ॥ ५१ ॥ अहमेवपुरामत्स्योवेदोद्धारकरस्त
था ॥ कौर्मींमायांसमाश्रित्यधृतोवैमंदराचलः ॥ ५२ ॥ वाराहंरूपमास्थायधरोद्धारःकृतोमया ॥ नारसिंहवपुर्धृत्वाहिर
ण्यकशिपुर्हतः ॥ ५३ ॥ वामनंरूपमास्थायबलिर्नीतोरसातले ॥ भूत्वापरशुरामोऽहंक्षत्रस्यांतकरोऽभवम् ॥ ५४ ॥ भूमे
र्भारापनोदश्चरामरूपेणवैकृतः ॥ कृष्णमायांसमाश्रित्यभूमेर्भारोहृतोमया ॥ ५५ ॥ योगमायांसमाश्रित्यबदरीविपिनेस्थि
तः ॥ कल्कीभूत्वाम्लेछजातीन्नाशयामिस्वमायया ॥ ५६ ॥ यत्किंचिद्दृश्यतेविप्रजगत्स्थावरजंगमम् ॥ मायैषाममविप्रेंद्रस
र्वमेतत्प्रकीर्तितम् ॥ ५७ ॥ अयंमायाप्रभावोमेकथितस्तवविस्तरात् ॥ यत्पृष्टोऽहंत्वयासर्वंममामायाबलंमहत् ॥ ५८ ॥
इतिश्रीस्कंदपुराणेकेदारखंडेकुब्जाम्रकमाहात्म्येमायावैभववर्णनंनामसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ छ ॥
॥ सोमशर्मोवाच ॥ ॥ प्रोक्तामायात्वयादेवजगदेतच्चराचरम् ॥ कथयस्वकथंजानेतवमायांदुरत्ययाम् ॥ १ ॥ स्वकर्मणा
ह्ययंलोकःकर्मसुवैप्रवर्तते ॥ त्वन्मायाप्रेरितोजंतुःकरोतीतिकथंपुनः ॥ २ ॥ तस्माद्यथामहाविष्णोतवमायांदुरत्ययाम् ॥ जा
नीयामितितांदेववृणेवरमिमंध्रुवम् ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ ममामायामहाभागदुर्गम्याचसुरैरपि ॥ अन्यंवरं
वृणीष्वत्वंधनरत्नवसुंधराः ॥ ४ ॥ अथचस्वर्गगमनंरंभासेवनमेवच ॥ स्वच्छंदगमनंचैवभूरादिषुमहामते ॥ ५ ॥ अथवेच्छ
सित्रैलोक्यराज्यंनिहतकंटकम् ॥ अथवेच्छासिपुत्रादींस्तथावाचांप्रचारणीम् ॥ ६ ॥ अवध्यत्वंसुरेंद्राद्यैरजेयत्वंसुरासुरैः ॥

अमरत्वंतथान्यद्वैमनईहितमेवच ॥ ७॥ ददामिसर्वंप्रवरंविनामायांतपोनिधे ॥ मायांद्रष्टुंनयोग्योऽसितपसांनिधिरेवहि
॥८॥ ॥सोमशर्मोवाच॥ ॥नकांक्षेभगवन्विष्णोवरमन्यंतथामहत् ॥ मायांदर्शयमेस्वीयांयदितप्तंमयातपः ॥ ९ ॥
॥स्कंदउवाच॥ ॥वारंवारंमहाभागमुनिनासोमशर्मणा ॥ याचितोऽपिरमाकांतोनददौतद्वरंद्विज ॥ १० ॥ एवंतेनतप
स्तप्तंत्रिवारंविष्णुदर्शनम् ॥ वार्य्यमाणोपिहरिणापुनर्मायामयाचत ॥ ११ ॥ भक्तानुरूपीभगवानुवाचचशुभांगिरम् ॥ मा
यांमेसोमशर्मंस्त्वंमदीयांपरिवेत्स्यसि ॥ १२ ॥ इत्युक्त्वांतर्दधेविष्णुस्तस्मिन्क्षेत्रेशुभावहे ॥ सोमशर्मापिगंगायांगतःस्ना
तुंद्विजोत्तम ॥ १३ ॥ धृत्वाकुंडींत्रिदंडींचधौतमासनमेवच ॥ कमंडलुंपुस्तकंचसोमशर्मासरित्तटे ॥ १४ ॥ संन्यस्यप्रययौ
स्नातुंगंगायांनियतव्रतः ॥ यावत्प्रविशतेतत्रगंगायांनाभिमात्रतः ॥१५॥ तावद्धृतोमहास्येनकच्छपेनमहामुनिः ॥ निगीर्ण
श्चर्वितश्चैवप्राणत्यक्तोबभूवह ॥१६॥ आकृष्टोयमदूतैश्चवायवीयवपुर्मुनिः ॥ मायांनारकसामग्रींददर्शसमहातपाः ॥१७॥
क्रकचैःपीड्यमानांश्चकथ्यमानांश्चसर्वतः ॥ ताड्यमानांश्चमुशलैर्हाहाकाररवांस्तथा ॥१८॥ददर्शकिंकरांस्तत्रयमस्यपरितो
बहून् ॥ सिंहाननान्वृकमुखान्विकृतान्विकृताननान् ॥ १९॥ केचिद्गर्जंतिकेचित्तुसाट्टहासास्तथापरे ॥भिंदिभिंदिचिंछंधिछिं	॥ ३४ ॥
धिभक्ष्यंभक्ष्यामिचापरः ॥२०॥ इतिनानाविधावाचःशुश्रावयममंदिरे ॥ दृष्ट्वापापगतिस्तेनतथापुण्यगतिर्मुने ॥२१॥ असंयु

तेजंतुस्तन्मायाप्रबलामम ॥ जाठराग्नौप्रदीप्तेहिगर्भाशयगतोमुने ॥ २३ ॥ मातृभुक्तान्नसारेणप्राणितिप्राणकूटकः ॥ पूर्वज
न्मसहस्राणिपापपुण्यकृताकृते ॥ २४ ॥ विजानात्यवशोजंतुर्गर्भेमायाबलंमम ॥ जानातिसुखदुःखेचतथात्मानंचविंदति
॥ २५ ॥ अंगुल्यश्चरणौचैवभुजौशीर्षंकटिस्तथा ॥ पृष्ठमथोदरंचैवदंतोष्ठपुटनासिकाः ॥ २६ ॥ कर्णाक्षिचिबुकादीनिसर्वं
मायाकृतंमम ॥ बधिरस्यापिव्यापारोंधस्यापिहतनेत्रतः ॥२७॥ मूकस्यचेष्टनज्ञानंसर्वंमायाकृतंमम ॥ मूढत्वेसंसृतौचैवजा
तमात्रेमहामते ॥ २८ ॥ धर्माधर्मपरिज्ञानंविस्मृतिश्चतथात्मनः ॥ माययामेमहाभागयोनियंत्राद्बहिर्गतः ॥ २९ ॥ कृमिर्ब्र
ह्मादिवाप्राणीपक्षिणोपानवायुभिः ॥ निष्क्रम्यमममायायावशमाप्नोतिसत्वरम् ॥ ३० ॥ जरायुजाश्चांडजाश्चस्वेदजा
द्विजपुंगव ॥ उद्भिज्जाःप्राणिनश्चैवजायंतेनिजरूपतः ॥ ३१ ॥ श्वेतकृष्णादयोभावामाययाममदेहिनाम् ॥ शब्दःस्पर्शस्त
थागंधोरूपंचापितथारसः ॥ ३२ ॥ माययाममभाव्यंतेलीयंतेचद्विजेश्वर ॥ समुद्राश्चतथादिव्यभौमैर्मध्येजलैरलम् ॥३३॥
पूर्य्यमाणानवर्द्धंतेमाययाममसर्वतः ॥ वर्षासुबहुतोयाश्चसरितःपल्वलानिच ॥ ३४ ॥ सरांसिवृद्धिमायांतिशुष्यंतेतपनेऽ
खिलाः ॥ एतन्मायाप्रभावोमेमेघागृह्णंतियज्जलम् ॥ ३५ ॥ लवणंलवणाब्धौचवर्षंतिमधुरंपुनः ॥ एषमायाप्रभावोमे
हिमवच्छिखरादधः ॥ ३६ ॥ मंदाकिनीसमाख्यातागंगाजातातःपरम् ॥ वन्यौषधीवीर्यरूपाप्राणान्जीवयतिद्विज

ष्ट्वाबहुविधैर्यज्ञैःसमाप्तवरदक्षिणैः ॥ ३७॥ पुनःस्वर्गंजगामाथभुक्ताभोगांश्चशाश्वतान् ॥ ततश्चंद्रस्यबिंबेचभूत्वानीहाररू
पधृक् ॥ ३८ ॥ सवतेस्मतथौषध्यांजीवश्चंद्रस्यमंडलात् ॥ एतस्मिन्नंतरेकाचिन्निषादवनिताततः ॥ ३९ ॥ जाताऋतुमती
विप्रगर्भाधानपराभवत् ॥ निषादेनतुयद्भुक्तंतत्रप्राप्तोमृतात्मकः ॥ ४० ॥ निषाद्यायोनियंत्रेवैक्षिप्तंमैथुनकर्मणा ॥ रेतःसंव
लितोजंतुर्लिंगात्स्त्रीयोनिसिंचितः ॥ दिनेनैकेनकललंकठिनत्वमगात्ततः ॥ ४१ ॥ बुद्बुदाकारतांप्राप्तःपंचरात्रेणसद्विजः ॥
ततःपेशित्वमापन्नोमांसत्वंसप्तरात्रतः ॥ ४२ ॥ मासार्धेनमांसपेशीरुधिरेणपरिप्लुतः ॥ कठिनत्वंतदाप्नोतिपंचविंशतिरात्रिषु
॥ ४३ ॥ मासात्शिरःसमुत्पत्तिर्ग्रीवास्कंधस्तनोदरम् ॥ पृष्ठवंशस्तथोत्पन्नःपंचधांगानिचक्रमात् ॥ ४४ ॥ पाणिपादौतथा
पार्श्वौकटिजानूद्वितीयके ॥ त्रिभिर्मासैःकरांगुल्यःसंधयश्चमहामुने ॥ ४५ ॥ मासाचतुर्थेनजाताःसर्वांगुल्यस्तपोनिधे ॥
नासिकाकर्णनेत्राणिपंचमेमासिसंस्फुटम् ॥ ४६ ॥ दंतभूमिर्नखागुह्यंजीवश्चजठरस्थितः ॥ अंगच्छिद्राणिषष्ठेचपायुमेढ्रं
तथामुने ॥ ४७ ॥ नाभिश्चसप्तमेमासिजातात्वस्यमहामुने ॥ लोमानिचमहाभागशीर्षकेशास्तथोद्गताः ॥ ४८ ॥ विभिन्नाव
यवत्वंचसर्वंजातंतथाष्टमे ॥ ववर्धजठरेजंतुःसंस्मरन्पूर्वकर्मतत् ॥ ४९ ॥ नानाजन्मानिजातानितथाचोच्चावचानिच ॥ जाठ ॥ ३५ ॥
राग्निसमुद्विग्नःकतिवारंस्वजन्मसु ॥ ५० ॥ स्वकर्मणाभाग्यहीनोजातोहंदेहदुःखभाक् ॥ नमेमृत्युःकर्मसूत्रान्निबद्धस्याति

पीडितः ॥ ५१ ॥ नानायोनिसहस्राणिअनुभूतानिवैमया ॥ मातापितृसहस्राणिपुत्रदारास्तथैवच ॥ ५२ ॥ कुटुंबभरणार्तिर्हि
जाताचममसर्वदा ॥ तत्कर्मनकृतंयेनजातोमुक्तिविवर्जितः ॥ ५३ ॥ नजानेपातकंतद्वैयेनजातोस्मिगर्भगः ॥ स्त्रीशरीरेभा
ग्यहीनोनिषादीगर्भसंस्थितः ॥ ५४ ॥ जातंमेदर्शनंविष्णोस्तपस्तप्तंचमेमहत् ॥ केनकर्मविपाकेननिषादीगर्भसंस्थितः ॥ ५५ ॥
किंकरोमिक्वगच्छामिपीड्यमानोग्निनामुहुः ॥ भक्ष्याभक्ष्यविधिश्चैवनस्थिरोममसांप्रतम् ॥ ५६ ॥ अतऊर्ध्वंकदाचिद्विभ
विष्यतिगतिर्बहिः ॥ कर्तव्यामेविष्णुचिंतागर्भवासोयतोनहि ॥ ५७ ॥ इतिवैचिंतयोद्विग्नःसवैब्राह्मणसत्तमः ॥ दशमेमासियो
नेस्तुकुर्वन्मातुःप्रपीडनम् ॥ ५८ ॥ पीड्यमानःस्वयंचैवनरकात्पातकीयथा ॥ निर्गतस्त्रीस्वरूपेणस्पृष्टःसंसारवायुना ॥
॥ ५९ ॥ जायमानातुसाकन्यारुरोदक्षुधयाप्लुता ॥ अजानतीमहामायांवैष्णवींविष्णुतत्परः ॥ ६० ॥ विण्मूत्रपरिक्लिन्नांगीस्त
नपानपरायणा ॥ वक्तुंकिमपिनोशक्तानगंतुंचक्वचिन्मुने ॥ ६१ ॥ एवंबाल्येपिदुःखान्यनुभूतानिवैतया ॥ क्रमेणयौवना
क्रांताजातानैषादिकन्यका ॥ ६२ ॥ पित्रादत्तापिकस्मैचिन्निषादायमहामते ॥ तत्रापिपुत्रभृत्यादिसंयुतासीत्क्रमेणसा ६३
एवंजातानिपंचाशद्वर्षाणिद्विजपुंगव ॥ एकदासानदीतीरेगतास्नातुंमहामते ॥ ६४ ॥ यावत्स्नातिमहाशूद्रातावत्कच्छपमूर्ति
ना ॥ कालेनसंगृहीतासापुनर्जातोयथापुरा ॥ ६५ ॥ स्नातुंसमागतोयद्वत्त्रिदंडीदंडकुंडिकाम् ॥ गृहीत्वावासस्सीतद्वत्पश्यतांवै

मा० क्षे० तपस्विनाम्॥६६॥एतस्मिन्नेवकालेतुनिषादःक्रोधमूर्छितः॥ महायष्टिंगृहीत्वातुतामन्वेष्टुंसमाययौ ॥ ६७ ॥ अन्वेषयामास मा० अ०
॥ ३६ ॥ सतांनदीतीरेविशेषतः ॥ वल्लीनांचैवकुंजेषुवप्रेषुतटवीचिषु ॥ ६८ ॥ एवमन्वेषतस्तस्यनिषादस्यमहामते ॥ दिनंसर्वंक्षयं १८
जातंप्रभातंचैवशर्वरी ॥६९॥ विललापततोऽरण्येगंगातीरंसमाश्रितः ॥ हाप्रियेक्कगतासित्वंत्यक्त्वामांपुत्रदारिकाः ॥ ७० ॥
किंकरोमिक्कगच्छामिकथंजीवियुजंतुकाः॥कामंप्रियेचिंतयानंशयानंशयनेस्थिता ॥ ७१ ॥ मधुरालापप्रश्नैश्चतूर्णमास्नाप
यिष्यति ॥ स्तनंधयश्चसकथंभविष्यतिविनात्वया ॥ ७२ ॥ मातर्मातःपुनर्मातरित्युक्त्वाश्रुपरिप्लुतः ॥ रोदयिष्यतिमांचै
वतथान्याज्ञातिबांधवान् ॥ ७३ ॥ कच्चित्त्वंपरिहासायलीनापुलिनसंस्तरे ॥ कच्चिन्ममप्रेमद्रष्टुंस्थिताकुंजांतवेश्मनि ॥ ७४
कच्चित्वांव्याघ्रसर्पाद्याआशुरंशुविवर्जितां ॥ कच्चित्त्वंगह्वरेतन्विगतानीताचराक्षसैः ॥ ७५ ॥ इतिलालप्यमानेतुतत्रतस्मि
न्निषादजे ॥ मुमोहमाययाविष्णोर्दृष्ट्वार्तंतादृशंमुनिः॥ ७६ ॥उवाचवचनंदीनंबाष्पकंठःसगद्गदम् ॥ मारोदीस्त्वंनिषादेशका
लोवैदुरतिक्रमः ॥ ७७ ॥ एतावत्कालमर्यादंसंबंधस्तेतयास्थितः ॥ स्वकर्मणानिबद्धासागताशोचस्वनोहिताम् ॥ ७८ ॥
रक्ष्यास्तेबालकायत्नात्पशवश्चधनंतथा ॥ अप्रमादेनस्थातव्यंशत्रुमित्रेषुसर्वदा ॥ ७९ ॥ इतितस्यवचःश्रुत्वाबाष्पगद्गदया ॥ ३६ ॥
गिरा ॥ उवाचसहसागत्यतत्रब्राह्मणसन्निधौ ॥ ८० ॥ भोभोद्विजवरश्रेष्ठक्कगतासाममप्रिया ॥ तयाविनाक्षणमपिनजीवे

क्षेमहाभागददर्शविविधागतीः ॥ असिभिर्भिद्यमानाश्चचक्रेणात्यंतपीडिताः ॥२२॥ निगडैर्बध्यमानाश्चतप्तैरायसनिर्मितैः
त्रिशूलैर्भेद्यमानाश्चभिन्नाश्चेष्टंतदंतपाः॥ २३ ॥ अपरेभिन्नमस्ताश्चभिन्नांगाश्चतथापरे ॥ लोहस्तंभेपुतप्तेषुबद्धादृष्टास्तथा
परे ॥ २४ ॥ नदींवैतरणींतत्रपूयशोणितवाहिनीं ॥ तृषाकृमिकुलैश्छन्नांतथापुरीषकर्दमाम् ॥ २५ ॥ संकीर्णांपापिभिश्चा
पिक्रंदमानैरितस्ततः ॥ असिपत्रवनंचैवतथासंतप्तवालुकम् ॥ २६ ॥ रौरवंचमहाघोरंयोजनत्रयविस्तृतम् ॥ संतप्यमानंती
क्ष्णेनवन्हिनाचसमंततः ॥ २७ ॥ हाहारवशताकीर्णंमहारौरवमेवच ॥ योनिपुंसाख्यमपरंतामिस्रंचमहार्तिदम् ॥ २८ ॥
महातामिस्रकंचैवसंभ्रमंचतथैवच ॥ अमेध्यकृमिसंपूर्णंपुरीषभक्षणंतथा ॥ २९ ॥ स्वमांसभक्षणंचैवकुंभीपाकंचदृष्टवान् ॥
एतेचान्येचबहवोयातनानरकास्तथा॥ ३० ॥ दृष्टास्तेनमहाभागलंबमानास्तरुव्रजे ॥ पश्यन्महातपाविप्रसंभ्रमंचतथैवच॥
॥ ३१ ॥अमेध्यकृमिसंपूर्णपुरीषभक्षणंतथा ॥ स्वमांसभक्षणंचैवतत्रपापान्समीक्ष्यवै॥ ३२ ॥ गतोब्रह्मपुरेविद्वान्नानाभोगपरि
प्लुतः॥ क्षुत्तृष्णारहितोविप्रोदुःखेनरहितस्तथा ॥ ३३ ॥ भूर्लोकेचभुवर्लोकेस्वर्लोकेचमहर्मुने ॥ तपःसत्येचपातालेअव्याहत
गतिर्द्विजः ॥३४ ॥ यत्रेच्छतिसवैगंतुंतत्रतत्रविमानगः ॥ जगामाप्सरगंधर्वकिन्नरैरुपशोभितः ॥३५॥ एवंवर्षसहस्रंवैभुक्त्वा
दिव्यंचभोगकम् ॥ पृथिव्यांचपुनर्जातोराजापरमधार्मिकः ॥३६॥ बुभुजेचततोभोगान्राज्यंप्राज्यंमहायशाः ॥ ३७ ॥ इ

रान्वितम् ॥ ९४ ॥ एतस्मिन्नंतरेतत्रनव्याधंनचबालकान् ॥ ददर्शदंडंकुंडींचधौतंपात्रंस्थितंयथा ॥ ९५ ॥ दृष्ट्वातन्महदा
श्चर्यंहरिमायावशोद्विज ॥ किमेतद्धिकिमेतद्धिचकितोऽभून्महामते ॥ ९६ ॥ स्मृत्वातन्मरणंचैवनरकाणांचदर्शनम् ॥ गर्भवा
संचनैषाद्यास्तथावैस्त्रीस्वरूपता ॥ ९७ ॥ तत्रमायांचपुत्रेषुधनेषुचतथापतौ ॥ परमंखेदमापन्नोदुरात्माहंभृशंखलः ॥ ९८ ॥
यस्यमेतादृशीजातागतिर्विष्णोस्तुचिंतनात् ॥ अभक्ष्यंभक्षितंचैवापेयंपीतंचवैमया ॥ ९९ ॥ अगम्यागमनंचैवकृतंयद्वैदु
रात्मना ॥ भवित्रीकागतिर्मेहिकृपयायस्यसर्वदा ॥ १०० ॥ पापादस्मात्कथंमेद्यनिष्कृतिर्भवितातथा ॥ तपश्चर्याकृतापूर्वं
प्राप्तंदुःखमनंतकम् ॥ १ ॥ इदानींपापकर्मभ्योभविताकिंपरत्रमे ॥ इतितच्चिंतयानस्यद्विजस्यमुनिपुंगव ॥ २ ॥ भक्तानुकं
पीभगवान्प्रत्यक्षंनिजगादह ॥ शंखचक्रगदापद्मधरैर्बाहुभिरन्वितः ॥ ३ ॥ पीतांबरलसत्कांतिर्वनमालाविभूषितः ॥ श्रीव
त्सवक्षास्तेजस्वीनवनीरदरूपधृक् ॥ ४ ॥ अनंतमणिमुक्ताभिर्ललितंमुकुटंतथा ॥ धारयन्वैत्रिलोकीशोरमयासहितःप्रभुः
॥ ५ ॥ रुदंतंतंसमासीनमधोवक्रंविमोहितं ॥ उत्तिष्ठोत्तिष्ठभद्रंतेतपोराशेमहामते ॥ ६ ॥ त्वत्समोनास्तित्रैलोक्येमद्भक्तोवि
जितेंद्रियः ॥ धन्योसिकृतकृत्योसिनतेदुर्गतिरस्तिहि ॥ ७ ॥ नत्वयाभक्षितंकिंचिन्नपीतंनकृतंतथा ॥ नतेभून्मरणंविप्रयात ॥ ३७ ॥
नानारकीनहि ॥ ८ ॥ नतेभूत्स्वर्गवासस्तुनराज्याप्तिर्नवैमृतिः ॥ नतेभूद्गर्भवासश्चनतेजाठरवेदनाः ॥ ९ ॥ नतेस्त्रीत्वस्य

संप्राप्तिर्नेनिषादगृहेजनिः ॥ नविवाहोनपुत्राद्यानैतत्सर्वंप्रपंचितं ॥ ११० ॥ यत्त्वयायाचितंभद्रतपश्चर्याफलंपुरा ॥ सैयंमा
यामयाविप्रदर्शिताप्रियलिप्सुना ॥ ११ ॥ एतयैवपरंमूढोनजानातिपरायणम् ॥ तयात्वंमोहितोविप्रदृष्टवानिदमद्भुतम् ॥
॥ १२ ॥ स्वावज्ञानचतेकार्यामायारूपमिदंजगत् ॥ स्वभावएषमायायाःप्रपंचःसार्वकालिकः ॥ १३ ॥ अनात्मनिशरीरादा
वात्मबुद्धिर्हियामता ॥ तयासंमोह्यतेसर्वंजगदेतच्चराचरम् ॥ १४ ॥ परमात्मनोनजन्मापिमरणंनचवेदना ॥ नवृद्धिर्नचवैन्हा
सोनबाल्यंनचयौवनम् ॥ १५ ॥ नचावार्द्धक्यभावोऽस्तिनित्यस्यपरमात्मनः ॥ ममचेष्टास्वरूपस्यस्वभावोऽयंप्रवर्तते ॥ १६
संसारमूलभूतायामायामेद्विजसत्तम ॥ शक्यतेसायुदित्यक्तुंप्रसादेनममप्रभो ॥ १७ ॥ तदातरतिसंसारंनानादुःखमयंचलं
॥ अतःपरंमहाभागमेमायासादुरत्यया ॥ १८ ॥ व्यापयिष्यतिनैवत्वांययासंसृज्यतेजगत् ॥ इदंचपरमंस्थानंसंसारताप
नाशनम् ॥ १९ ॥ मायातेदर्शितायद्वैततोमायाभिधंत्विदं ॥ तीर्थंपापवनाग्नेर्वैसद्यःशुद्धिकरंस्मृतम् ॥ २० ॥ येनराःपिंडदानं
हिकरिष्यंतिमहाशयाः ॥ तेषांगयाश्राद्धशतैःकिंकर्तव्यंकृतैस्तथा ॥ २१ ॥ दानमत्रकुरुक्षेत्रेवृद्धितोऽष्टगुणंतथा ॥ मायाकुं
डेतथास्नानंकोटिकोटिगुणंतथा ॥ २२ ॥ स्नानंदानंतपोहोमःस्वाध्यायःपितृतर्पणम् ॥ सर्वंकोटीतथाकोटिर्भविष्यतिनसंश
यः ॥ २३ ॥ मायाकुंडमिदंमायाक्षेत्रेश्रेष्ठतरंस्मृतम् ॥ ॥ स्कंदउवाच ॥ ॥ इत्युक्त्वाथोसभगवान्महाविष्णुर्महामते ॥

मा०क्षे० ॥ २४ ॥ अंतर्दधौब्राह्मणस्यपश्यतःसोमशर्मणः ॥ आश्चर्यंपरमंलेभेसोमशर्माद्विजोत्तमः ॥ तत्रैवसंस्थितोविप्रोदृष्टवान्मु मा०अ०
॥ ३८ ॥ निपुंगवान् ॥ २५ ॥ स्नातुंसमागतास्तेचापृछंस्तंतुमहाशयाः ॥ किंकृताशीघ्रताविप्रमज्जनेचाघमर्षणे ॥ २६ ॥ इतितेषांच १९
वचनंश्रुत्वामायाबलंचतत् ॥ नमुमोहमहाभागकृपयाजगदीशितुः ॥ २७ ॥ सोऽपिकालेनकेनापिसायुज्यंप्राप्तवान्परे ॥ इ
तितेकथितंविप्रमायातीर्थस्यवैभवम् ॥ २८ ॥ श्रुत्वायत्सर्वमायाभ्योलिप्यतेनहिमायया ॥ इदंस्थानंपरंगोप्यंभवमुक्तिक
रंध्रुवम् ॥ २९ ॥ इतिश्रीस्कंदपुराणेमायाक्षेत्रमाहात्म्येकुब्जाम्रकेसोमशर्मोपाख्यानंनामाष्टादशोध्यायः ॥ १८ ॥ ॥
॥ स्कंदउवाच ॥ ॥ अथान्यत्संप्रवक्ष्यामितीर्थंपरमपावनम् ॥ तस्मादूर्ध्वप्रदेशेहिधनुषांपंचविंशतौ ॥ १ ॥ कौमुदंनाम
तीर्थंहित्रिषुलोकेषुदुर्लभम् ॥ यत्रस्नात्वानरोविप्रसोमलोकेमहीयते ॥ २ ॥ कार्तिकेचतथाराधेमाघेमार्गशिरेतथा ॥ स्नानं वैशाखे
कुर्वंतियेप्यत्रज्ञानादज्ञानतोऽपिवा ॥ ३ ॥ प्राप्नुवंतिपरंस्थानंयत्रगत्वानशोचति ॥ यदिकश्चिद्भाग्यवशात्प्राणांस्त्यजतित
त्रवै ॥ ४ ॥ पुमान्वायदिवामूढोनारीवापापसंयुता ॥ सयातिपरमंस्थानंपुनरावृत्तिदुर्लभम् ॥ ५ ॥ तस्यचिह्नंप्रवक्ष्यामिय
थातज्ज्ञायतेपरम् ॥ कुमुदस्यतथागंधोलभ्यतेमध्यरात्रके ॥ ६ ॥ अकस्माच्चंद्रिकातत्रदृश्यतेतीर्थराजके ॥ पुरातत्रमहा ॥ ३८ ॥
भागचंद्रोवैतप्तवांस्तपः ॥ ७ ॥ दिव्यंवर्षसहस्रंचमहादेवमनुस्मरन् ॥ ततःप्रसन्नोभगवान्संतुष्टोवृषभध्वजः ॥ ८ ॥ प्रा

हंसुदुःखितः ॥ ८१ ॥ क्वगतावनकुंजेषुनदीनांसंगमेषुच ॥ बृहत्कुटजवातेषुपर्वतानांचमूर्धसु ॥८२॥ तमालमालजालेषुकूजि
तेषुचकोकिलैः ॥ रमयिष्यामिविप्रेशतथाविपिनपंक्तिषु ॥ ८३ ॥ कथयस्वमहाभागक्वगतासाप्रियंवदा ॥ प्राणदोभवसिसौ
म्यरक्षस्वममबालकान् ॥ ८४ ॥ इतीरितंतस्यवचोनिशम्यसनिषादपुत्रस्यविमोहितोद्विजः ॥ सबाष्पकंठोद्गतमंदवाक्यंज
गादभूयोजगदीशमोहितः ॥ ८५ ॥ अहंतवस्त्रीभवनाधिवासिनीस्थितानिषादेश्वरगच्छमंदिरे ॥ एतावदेवाभवदस्तिनोत
वसंबंधकःकर्मगतानुसारिकः ॥ ८६ ॥ रक्षस्वचेमानतिबालकान्मेत्वमेवतेषांजननीपिताच ॥ कनिष्ठकोयःसततंहिरक्ष्योग
च्छस्वगेहेवचनंकुरुष्व ॥ ८७ ॥ निष्ठाकृष्टिर्वैधमानाधिदेशेपुत्रेतेज्ञानिष्टकृष्टेनिकृष्टा ॥ दुष्टाभ्रष्टानीरसानष्टकाःस्युःपुत्रोमे
तास्तेनरारामजीवाः ॥ ८८ ॥ एवंलुब्धंवाक्यमुक्त्वाद्विजस्तुरुरोदोच्चैस्तेनसाकंमुनीश ॥ विष्णोर्मायासंवशोह्यस्वतंत्रोहाहे
त्युक्त्वापातयामासबाष्पान् ॥ ८९ ॥ व्याधोपितत्राशुतदीयबालानानाययामासविमोहनार्थं ॥ रुरोदपादेपतितोजगाद
भूयश्चदेवेशविमोहितंपरम् ॥ ९० ॥ एतेवैबालकामह्यंमोहयंतितरांमुने ॥ गच्छमेमंदिरंशीघ्रंत्वंमत्वामातरंतथा ॥ ९१ ॥ जी
विष्यंतितथाहंचरक्षनोम्रियमाणकान् ॥ रक्षात्वयाप्रकर्तव्यागृहेगत्वामयावनात् ॥ ९२ ॥ आनेष्येमृगपक्ष्याद्यान्भक्षणार्थंय
थापुरा ॥ तवैवसर्वंभवनंबालकाश्चधनंतथा ॥ ९३ ॥ इतिश्रुत्वावचोविप्रनिषादस्यनदीतटे ॥ चकारमनसोभावंगेहेगंतुंत्व

॥ २३ ॥ जलमध्येचसंपूज्यशिवलोकेमहीयते ॥ शतंवर्षसहस्राणिदिव्यभोगसमन्वितः ॥ २४ ॥ ततस्तस्मात्परिभ्रष्टोब्रा
ह्मणःशुद्धवंशजः ॥ जायतेममभक्तश्चसर्वशास्त्रविशारदः ॥ २५ ॥ पुनर्मुक्तिमवाप्नोतिमृतायत्तीर्थकेपरे ॥ द्वादश्यांशुक्लपक्षे
तुयस्तत्रकुरुतेक्रियाः ॥ २६ ॥ सर्वाह्यनंतफलदास्तस्मिन्पापविवर्जिते ॥ प्राणांस्त्यजतिवाह्यत्रव्रतेनव्रततत्परः ॥२७॥
विष्णुर्ददातिसाक्षाद्वैदर्शनंचामृतंतथा ॥ तस्माद्बाणप्रमाणेहितीर्थकंकरवीरकम् ॥ २८ ॥ माघमासेसितेपक्षेद्वादश्यांकर
वीरकः ॥ पुष्पितोदृश्यतेतत्रतस्मात्तज्ज्ञायतेशुभम् ॥ २९ ॥ पितृभ्यश्चांबुदानंहियैःकृतंशुभलिप्सुभिः ॥ कल्पकोटिसह
स्रेषुविमानवरमास्थितः ॥ ३० ॥ मोदतेभुवनेविष्णोःपितृभिःसहनारद ॥ ततोगच्छेत्पुंडरीकेतीर्थेपापवनानले ॥ ३१ ॥
यत्रचक्रप्रमाणेवैचरतेकमठोमुने ॥ मध्याह्नेतत्रदेवेशोह्यायातिनिजशुद्धये ॥ ३२ ॥ तत्रस्नात्वामहाभागपुंडरीकफलंलभेत् ॥
यस्तत्रत्यजतेप्राणान्सयातिहरिमव्ययम् ॥ ३३ ॥ यस्तत्रकुरुतेदानंत्रुटिमात्रंहिरण्यकम् ॥ दशानांपुंडरीकाणांयज्ञानांफ
लभाग्भवेत् ॥ ३४ ॥ अथान्यत्तेप्रवक्ष्यामितीर्थंकुब्जाम्रकेस्थितम् ॥ पुंडरीकस्यतीर्थस्यवामभागेधनुःशते ॥ ३५ ॥ गुह्यमे
तच्छुभंकुंडंज्ञायतेनैवपापिना ॥ येनस्नातंचतीर्थेषुयेनवैपूजनंहरेः ॥ ३६ ॥ कृतंसवैविजानातितीर्थंपरमपावनम् ॥ यत्राग्निः
संस्तुतोदेवैःपुराप्रादुर्बभूवह ॥ ३७ ॥ तस्मादिदंयेनदृष्टंविष्णुसायुज्यमाप्नुयात् ॥ यदत्रक्रियतेकर्मसर्वंतत्स्यादनंतकम्



॥ ३८ ॥ यत्रवैस्नानमात्रेणब्रह्महत्यादिकोटिभिः ॥ संयुक्तोपिनरःपापैर्मुच्यतेनात्रसंशयः ॥ ३९ ॥ त्रैलोक्येधन्यतांयाति
दर्शनाद्दर्शनार्थवित् ॥ अग्नितीर्थस्यसंयोगोयावन्नोभवतिद्विज ॥ तावत्कलिभयंविंद्यात्स्पृष्टेपापक्षयोभवेत् ॥४१॥ ॥ इति
श्रीस्कंदपुराणेकेदारखंडेमायाक्षेत्रमाहात्म्येकुब्जाम्रकेकौमुदकातीर्थमाहात्म्यवर्णनंनामएकोनविंशतितमोऽध्यायः ॥ १९
॥ नारदउवाच ॥ ॥ कथंवैश्वानरोदेवैःसंस्तुतोदैवतर्षभ ॥ किमर्थंचागतादेवाःकुब्जाम्रेक्षेत्रउत्तमे ॥ १ ॥ ॥ स्कंदउवा
च ॥ ॥ शृणुवत्सपुरावृत्तंपापघ्नंसर्वकामदम् ॥ यथावैश्वानरोदेवःप्राप्तवाञ्छापमीशितुः ॥ २ ॥ एकदाहिमशोभाढ्येकै
लासेप्रमथावृते ॥ शिवश्चशिवयासार्धंक्रीडन्नास्तेरसाप्लुतः ॥ ३ ॥ शालतालतमालैश्चखर्जूरैःपनसैर्मृडैः ॥ भूर्जैर्भुर्जकनै
श्चैवकुंकुमैश्चंपकट्फलैः ॥ ४ ॥ घनैर्नीहारसंयुक्तेरजतेनैवसंवृते ॥ तत्रस्वर्णमहावृक्षाःपक्षिणश्चहिरण्मयाः ॥ ५ ॥ नाना
प्रसवशोभाढ्येधातुशृंगविभूषिते ॥ रमयामासदेवेशोगिरौगिरिजयासह ॥६॥ वसंतश्चतदातत्रसमग्रेणेंदुनासह ॥ पुंस्को
किलरुतैश्चैवतथामधुरनिस्वनैः ॥ ७ ॥ पुष्पितानिवनान्यासन्विचेरुर्भ्रमरास्ततः ॥ एवंतस्मिन्वनोद्देशेक्रीडायांसंस्थितौशि
वौ ॥ ८ ॥ एतस्मिन्नंतरेतत्रदर्शनार्थमुमापतेः ॥ आजगामशुनासीरस्त्रिदशैश्चसमन्वितः ॥ ९ ॥ यावद्गच्छतिकैलासेप्रणमितुं
सदाशिवम् ॥ तावन्निवारितोनंदीगणेनप्रमथेशिना ॥ १० ॥ एकांतेसंस्थितोदेवःशिवयासहितःप्रभो ॥ नकालोदर्शनस्या

यंगच्छध्वंत्रिदशेश्वर ॥ ११ ॥ इत्युक्तोनंदिनाशक्रोजगादाग्निमितःस्थितम् ॥ त्वमग्नेसर्वभूतानामंतश्चरसिसर्वदा ॥ १२ ॥ त्वयातत्रप्रगंतव्यंविलोलेनमदाज्ञया ॥ सत्यंवायदिवासत्यंवदतिप्रमथोह्ययम् ॥१३॥ शिवःकिमंतःकुरुतेसर्वंविज्ञायचेष्टितम् ॥शीघ्रंत्वयाप्रगंतव्यंमाविलंबंकुरुष्वभोः ॥ १४ ॥ इत्याज्ञांशिरसाकृत्वावन्हिःकालप्रचोदितः ॥ जगामत्वत्रदेशोहियत्रास्तेभगवाञ्छिवः ॥१५॥ अग्नेर्विचेष्टितंज्ञात्वामहादेवोदिवस्पतेः ॥ कारितंचतथाज्ञात्वाशशापाग्निंत्वरान्वितः ॥१६॥ यज्ञभागाश्चदेवानांनाशमेष्यंतिसत्वरम् ॥ अयमग्निश्चलोकाद्धिविनंक्ष्यतिनसंशयः ॥ १७ ॥ इतीरितेशिवस्याग्निर्ननाशक्षणमात्रतः ॥ इंद्रोपिदैवतैःसार्धंवेपमानोगृहंययौ ॥ १८ ॥ निःस्वाध्यायवषट्कारंत्रैलोक्यमभवत्क्षणात् ॥ निश्चेष्टाश्चतथाह्यासन्प्राणिनोवह्निवर्जिताः॥ १९॥ प्रलयेयानिकर्माणितान्यासन्वह्निसंक्षये ॥ उल्कापाताश्चशतशोनिपेतुर्धरणीतले ॥ २०॥ इंद्रोपिदैवतैःसार्धंययौक्षीरोदसागरे ॥ तत्रस्थितंरमानाथंब्रह्मणासहितस्तथा ॥ २१ ॥ ब्रह्मापितत्रगत्वाचविष्णुंस्तोतुंप्रचक्रमे ॥ विनयावनतोभूत्वावासवेनसमन्वितः ॥ २२ ॥ ॥ब्रह्मोवाच ॥ ॥नमस्तेभगवन्विष्णोचराचरगुरोविभो ॥ रमापतेरमाधीशकृतदैत्यविनाशन ॥ २३ ॥ मुरारयेनमस्तुभ्यंनमोभक्तजनाश्रय ॥ नमस्तेस्तुसजीवाक्षसहस्राक्षायतेनमः ॥ ॥४०॥
॥ २४ ॥ ऋग्वेदायनमस्तुभ्यंयजुर्वेदनमोस्तुते ॥ सामवेदायदेवायनमोऽथर्वस्वरूपिणे ॥ २५ ॥ अग्निनाशेनसर्वेषांनाशो

दात्स्थानंललाटेस्वेचंद्रायध्रुवमुत्तमम् ॥ कौमुदस्यसुमासस्यएकायांयन्निशाकरः ॥ ९ ॥ वरंचप्राप्तवान्रुद्रात्तीर्थंकौमुदकंततः ॥ तस्यैवदक्षिणेभागेशिवश्चंद्रेश्वराभिधः ॥ १० ॥ यस्यदर्शनमात्रेणनश्यंतेपापकोटयः ॥ चंद्रेश्वरंसकृद्दृष्ट्वास्नात्वावैकौमुदेन्हदे ॥ ११ ॥ पुष्कलांलभतेसिद्धिंविष्णुलोकंचगच्छति ॥ अन्यच्चतेप्रवक्ष्यामितीर्थंसार्षपकंपरम् ॥ १२ ॥ यस्यदर्शनमात्रेणशुद्धोभवतिमानवः ॥ तस्माच्छरद्वयेपुण्यंसर्वपापप्रणाशनम् ॥ १३ ॥ यत्रब्रह्माचरुद्रश्चविष्णुश्चैवपुरासुराः ॥ पातयामासुरत्यर्थंसर्षपान्यज्ञहेतवे ॥ १४ ॥ यदादक्षोमहातेजागंगाद्वारसमीपतः ॥ चकारविपुलंयज्ञंयत्रदग्धासतीपुरा ॥ १५ ॥ तत्रचेदंमहातीर्थंनाम्नासार्षपकंस्मृतम् ॥ यत्रस्नानान्नरायांतिलोकान्पुण्यान्समीहितान् ॥ १६ ॥ अथात्रमुंचतेप्राणान्महापापैर्युतोपिवा ॥ सगच्छतिपरंस्थानंयत्रब्रह्मादयःसुराः ॥ १७ ॥ यदिभाग्यवशाद्विप्रवैशाखेस्नातिमानवः ॥ तस्यपुण्यफलंवक्तुंकल्पेनापिनशक्यते ॥ १८ ॥ सर्वतीर्थेषुयत्पुण्यंसर्वयज्ञेषुयत्फलम् ॥ तत्फलंलभतेतत्रस्नानमात्रेणमानवः ॥ १९ ॥ तस्यचिह्नंप्रवक्ष्यामिमध्याह्नेभृंगरूपधृक् ॥ समायातिरविःस्नातुंरविवारेविशेषतः ॥ २० ॥ अन्यच्चतेप्रवक्ष्यामितीर्थंकुब्जाम्रकेमहत् ॥ नाम्नापूर्णमुखंख्यातंदेवानामपिदुर्लभम् ॥ २१ ॥ यत्रवैस्नानमात्रेणसोमलोकंप्रगच्छति ॥ ज्ञेयंतत्रोष्णसलिलंशीतेगंगाजलेपुनः ॥ २२ ॥ यस्यदर्शनमात्रेणसर्वपापैःप्रमुच्यते ॥ सोमेश्वरंमहालिंगंजलमध्येप्रवर्तते ॥

नपालकंसंस्तुमः ॥ ३७॥ भजेमगजचर्मणाप्रकटबुद्धितत्कर्मणासुशोभितकटोत्कटंनटितभूरिचंचज्जटम् ॥ चराचरपरंप
रादरणधीरमंधासुरासुरेशमृतिकारकंजितमनोजकंतारकम् ॥ ३८॥ श्रयेमतवभावनंप्रखरचंडनद्याहतप्रकीर्णमणिमंज
रीमुकुटकूटभूतावृतम्॥ महेशभवनंपरंपरमुदापुनर्भाविताविरोधिविविधार्थदंविबुधवंद्यपादेनताः ॥ ३९ ॥ ॥ स्कंदउ
वाच॥ ॥इतिदेवैःस्तुतोदेवोभगवान्पार्वतीपतिः ॥ आविर्बभूवतरसावृषस्थश्चंद्रशेखरः ॥ ४० ॥ उवाचवचनंदेवान्ब्र
ह्मादीञ्ज्ञातवेदसम्॥ इच्छतोभक्तिनम्रांस्तान्मेघगंभीरनिस्वनः ॥ ४१॥ ॥ईश्वरउवाच ॥ ॥ भोभोदेवगणाःसर्वेय
दर्थंपरिचिंतया ॥ समागतास्तुतोहंवैसंतुष्टःप्रददामिवः॥ ४२॥ मन्नेत्रप्रभवेणाशुवह्निनाकुरुतक्रतून् ॥ आप्ययध्वंतथाभू
तान्नयध्वंददतोमम ॥ ४३॥ ॥ स्कंदउवाच॥ ॥इत्युक्त्वासहसाभीमोनेत्रज्वालांभयानकाम् ॥ददौदीनान्महाभाग
लेलिहानंत्रिलोककम् ॥ ४४॥ तांज्वालांशिवनेत्रोत्थांदृष्ट्वात्रस्ताःसुरासुराः॥ प्रसादयामासुरपिस्तोत्रेणानतमस्तकाः॥
॥ ४५॥ ॥देवाऊचुः॥ ॥ अग्निर्वैश्वानरोवह्निःकृष्णवर्त्माभयानकः॥ प्रभवोविभवश्चैववीतिहोत्रस्तनूनपात्॥ ४६॥
भव्योभीमोभीमनेत्रसमुत्थोदेहसंस्थितः॥ त्रैलोक्यदीपकोभानुःस्वर्भानुःसर्वगस्तथा ॥ ४७॥ चित्रभानुःशीतहंताशीतसं ॥४१॥
स्थःकृपाकरः॥ धेनुकोवडवाजन्माजाठरोजठरस्थितः ॥ ४८॥ यज्ञनेतायज्ञभोक्तायज्ञगम्योलयंकरः ॥ कृपीटयोनिःशो

चिष्माञ्ज्वलनोजातरूपदः ॥ ४९॥ जातवेदावेदसंस्थोह्याश्रयाशोमहाप्रभुः॥ दानवारिर्ज्वलत्कोशोमदनोदीनवत्सलः
॥ ५०॥ ॥स्कंदउवाच॥ ॥ अग्नेरेतानिनामानियःपठेत्प्रयतोनरः॥ सर्वसिद्धिमवाप्नोतिशतयज्ञफलंलभेत् ॥ ५१॥
मंदाग्निर्योनरोविप्रसुभक्त्याप्रतिपत्तिथौ ॥ नामामृतंपिबेन्नित्यंत्रिवारंनियतःशुचिः ॥ ५२ ॥ मंदाग्निस्तस्यनश्येतसर्वरो
गक्षयस्तथा॥ धन्योभवतिलोकेषुपूतात्मानात्रसंशयः॥ ५३॥ स्तूयमानस्ततोवन्हिःशांतात्माह्यभवत्क्षणात्॥ ततोदेवाम
हेशाद्यास्तीर्थमेतत्समाश्रिताः॥ ५४॥ ततोमुनेशुभंतीर्थमग्निसंज्ञमिदंस्मृतम्॥ यत्रस्नात्वाशुभाँल्लोकान्प्राप्नोतिपरमंपदम्
॥ ५५॥ तस्यैवमभिधानंतुकृत्वादेवाःसवासवाः॥ प्राप्याग्निंशिवतोविप्रयथास्थानंययुस्ततः ॥ ५६॥ इतितेकथितावह्नि
तीर्थोत्पत्तिःशुभंकरी॥ यांश्रुत्वापिनरोयातिपूतात्मास्वर्गलोककम् ॥ ५७॥ आषाढ्यांचैवद्वादश्यांकार्तिक्यांवाविशेषतः॥
तथामार्गशीर्षमासिद्वादश्यांदर्शकेऽपिवा ॥ ५८॥ यःकरोत्यग्निपूजांचस्नानंदानंजपंतथा ॥ सयातिपरमाँल्लोकान्पुनरावृ
त्तिदुर्लभान्॥ ५९॥ चिह्नंतत्रप्रवक्ष्यामियेनतज्ज्ञायतेशुभम्॥ उष्णंभवतिहेमंतेह्यष्टधारंमहामते ॥ ६०॥ गंगाभवतित
त्रोष्णाग्रीष्मेशीतातिमात्रतः ॥ यस्तत्रमुच्यतेप्राणान्दिव्याँल्लोकान्सगच्छति ॥ ६१॥ कोटिवर्षसहस्राणिविमानवरमा
स्थितः॥ अप्सरोगणसंयुक्तोभोगभाग्भवतिध्रुवम्॥६२॥ भुक्त्वाभोगंपुनर्मर्त्येराजाभवतिधार्मिकः॥ पुत्रपौत्रैःपरिवृतःश

त्रुपक्षाववर्जितः ॥ ६३ ॥ संशास्तिपृथिवीमेतांससागरवनावृताम् ॥ अंतेतद्वैष्णवंधामसंप्राप्नोतिनसंशयः ॥ ६४ ॥ एतदेव
परंक्षेत्रेतीर्थंपुण्यतमंस्मृतम् ॥ तरंतिमानुषायस्माद्घोरसंसारसागरम् ॥ ६५ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायापुरीमा
हात्म्येकुब्जाम्रकेअग्नितीर्थमाहात्म्यकथनंनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥
॥ स्कन्दउवाच ॥ ॥ अन्यत्तीर्थंशृणुप्राज्ञवायव्यंतीर्थमुत्तमम् ॥ कुब्जाम्रकेमहाभागसर्वपापभयापहं ॥ १ ॥ यत्रवायुस्त
पस्तेपेपंचवर्षसहस्रकम् ॥ प्राप्तवांश्चतथातत्रदिक्पालत्वंमहायशाः ॥ २ ॥ अस्मिन्कृतोदकोयस्तुपुण्यात्मापितृतारकः ॥
दिव्यवर्षसहस्राणिस्वर्गलोकेमहीयते ॥ ३ ॥ यःकरोतितथास्नानंवाजपेयशतस्यच ॥ फलंप्राप्नोतिमनुजःसत्यमेतद्वदामिते
॥ ४ ॥ यस्तत्रत्यजतेप्राणान्वायव्येविजितेंद्रियः ॥ नसभूयोमहाभागजायतेनरलोकके ॥ ५ ॥ तत्रचिन्हंप्रवक्ष्यामिवायव्ये
चमहामते ॥ तत्राश्वत्थस्यपत्राणिचलंतेवायुनेरिताः ॥६॥ स्वनंतेचतथातत्रद्वादश्यांदृश्यतेमुने ॥ अन्यत्तत्रैवविख्यातंपादवं
तीर्थमुत्तमम् ॥ ७ ॥ तत्रचिन्हंप्रवक्ष्यामियेनतज्जायतेशुभम् ॥ पदानितत्रदृश्यंतेहस्तिनोवासवस्यतु ॥ ८ ॥ नित्यमायाति
तत्रैववासवोवसुसंवृत्तः ॥ तत्रस्नानेनसंयातिपुरुहूतपदंशुभम् ॥ ९ ॥ चंद्रिकेतिसमाख्यातानदीपरमपावनी ॥ तत्संगमेन
रःस्नात्वाचंद्रलोकेमहीयते ॥ १० ॥ तत्रैवगणपोनामभैरवोभीषणाकृतिः ॥ तत्रचिन्हंप्रवक्ष्यामिसिंदूराभातुमृत्तिका ॥ ११ ॥ ॥ ४२ ॥

भवतिनिश्चितम् ॥ निःस्वाध्यायवषट्कारंत्रैलोक्यंसचराचरम् ॥ २६ ॥ विनंक्ष्यतेरमानाथवयंसर्वेसवासवाः ॥ त्वयैवेदंकृत
पूर्वमकालेक्षयमेतिच ॥ २७ ॥ रुद्रशापाग्निनादग्धोनष्टोऽग्निर्भुवनत्रये ॥ यदायदामहाविष्णोग्लानिर्भवतिसंसृतौ ॥
॥ २८ ॥ तदात्वयैवसर्वंहिकृतंशत्रुविनाशनम् ॥ पुनर्यथावीतिहोत्रोजायतेचतथाकुरु ॥ २९ ॥ ॥ श्रीभगवानुवाच ॥ ॥
गच्छध्वंत्रिदशाःसर्वेकुब्जाम्रेक्षेत्रउत्तमे ॥ तत्राहंचशिवश्चापिसंस्थितौचतुरानन ॥ ३० ॥ तत्रह्याराधयिष्यामोभगवंतंम
हेश्वरम् ॥ नित्यंसन्निहितस्तत्रपिनाकीत्रिदशेश्वराः ॥ ३१ ॥ ॥ स्कंदउवाच ॥ ॥ इतिकृत्वामतिंतेवैब्रह्माद्यास्त्रिदिवौ
कसः ॥ गत्वाकुब्जाम्रकेक्षेत्रेशिवंस्तोतुंप्रचक्रमुः ॥ ३२ ॥ ॥ देवाऊचुः ॥ ॥ प्रतिष्ठितानीश्वरमार्यवृत्तिकृत्तिप्रवृत्तेनव
मालतीमे ॥ वृंदारवंद्याखिलमूर्तिकंदेवंदीशवंदीभवचूडचंद्रे ॥ ३३ ॥ अधीरशेसागरकालकूटकंठेप्रचंडापरवारदूद्यो ॥ वि
द्यानवद्येमितिवेद्यवेद्येसिद्धेप्रसिद्धेविधुबुद्धिशुद्धे ३४ ॥ भावःस्यान्नोभीतिभाजांशभाजोभूयःस्यान्नःश्वेतभूभृद्वरेशात् ॥ के
शावासेनेनोतांसरूपाद्भूतेशोभूमीमभूपांतराजः ॥ ३५ ॥ स्फुरद्विधुदलालिकंकलितकालिसन्मालिकंसुनेत्रवनमंजरीप्रभ
वभूरिगंगास्पदम् ॥ वमद्विषपरंपराभयकराहिभूषाधरंधराधरसुतापरंपरमहंभजामोवयम् ॥ ३६ ॥ प्रपन्नपरमोपहंवृ
जिनदोहमोहापहंजलौघवरधीप्रदंधरवराधिपार्थप्रदम् ॥ जरामरणकालिनंभवविलाससंशालिनंगलेवलितकालकंभुव

गुफा

भागेबिलमस्तिमहत्तरम् ॥ तत्रशेषःस्वयंनित्यंवसतेनात्रसंशयः ॥ २७॥ श्वेतवर्णःस्वर्णबिंदुःकृष्णनेत्रःप्रदृश्यते ॥ पुण्यात्म
भिर्महाभागयैर्गत॰यंहरिक्षये ॥ २८ ॥ ॥नारदउ॰ ॥ ॥ लक्ष्मणेनतपस्तप्तंकिमर्थंतत्रतीर्थके ॥ किंप्राप्तंचफलंतेनशुद्धेनप
रमात्मनः ॥ २९ ॥ किमर्थंतत्रवसतेवासुकिःसर्पनायकः ॥ एतत्सर्वंसमासेनकथयस्वशिवात्मज ॥ ३० ॥ ॥स्कंदउ॰॥ ॥
शृणुनारदवृत्तांतंपापघ्नंसर्वकामदं ॥ श्रुत्वापियन्महाभागमुच्यतेसर्वकिल्बिषैः॥३१॥ पुरारामोमहातेजाःपितुराज्ञासमन्वि
तः॥सीतयासहितोभ्रात्रालक्ष्मणेनसमन्वितः॥३२॥ययौवैदंडकारण्येनानामुनिगणान्विते॥पंचवट्यांमहाभागस्थित्वापर्ण
मयींकुटीं ॥ ३३ ॥ कारयामासभगवान्निवासार्थंमहामतिः ॥ तत्रैववसतस्तस्यरामस्यविदितात्मनः ॥ ३४ ॥ रावणस्यस्व
सातत्रनाम्नाशूर्पणखाययौ ॥ दृष्ट्वातौभ्रातरौतत्रकंदर्पाविवरूपिणौ ॥ ३५ ॥ कामस्यवशमापन्नाचकंपेयत्परिग्रहम् ॥ राम
स्यसन्निधौगत्वाविकटांगीघटोदरी ॥ ३६ ॥ विहस्यवचनंप्रोचेरामंदशरथात्मजम् ॥ भोभोःपुरुषशार्दूलभुवनेत्वत्समोनहि
॥ ३७ ॥ आगच्छत्वंमयासार्द्धंगिरीणांकंदरेषुच ॥ संगमेषुनदीनांचवनांतेषुसरित्सुच ॥ ३८ ॥ क्रीडस्वत्वंमयासार्द्धंयौवनांतो
तिवर्तते ॥ चतुर्दशसहस्राणामधिपौखरदूषणौ ॥ ३९ ॥ भ्रातरौममवीर्याढ्यौजनस्थाननिवासिनौ ॥ लंकेश्वरेणप्रहितौ
भ्रातामेहिंसितुंमुनीन् ॥ ४० ॥ अन्यथावांभक्षयिष्येअनयासहमानुष ॥ इत्युक्तःसहसारामस्तयाभगवतोत्तमः ॥ ४१ ॥



उवाचविहसन्वाक्यंसौमित्रिंवरयस्वभो ॥ अहंकलत्रवानस्मिसपत्नीयंवरानने ॥ ४२ ॥ एवमुक्तातुरामेणलक्ष्मणंचतथाब्र
वीत् ॥ लक्ष्मणोपिविहस्यैनामुत्तरंप्रोक्तवान्कटु ॥ ४३॥ ततःक्रुद्धाशूर्पणखातांहंतुमुपचक्रमे ॥ इतितच्चेष्टितंदृष्ट्वारामोराजीव
लोचनः ॥४४ ॥ चकर्त्तनासांकर्णौचतस्यास्तत्रमहामते ॥ रुदतीरुधिरासिक्ताययौशीघ्रंखराश्रमम् ॥४५॥ खरंचदूषणंचैषा
नयामाससंसैन्यकौ ॥ निहतौराक्षसास्तेनरामेणापिजनस्थले ॥ ४६ ॥ सापिकर्ममहद्दृष्ट्वाययौलंकांविनासिका ॥ रुधिरा
प्लुतसर्वांगीजगादपुरुसंसदि ॥४७॥ मृतोसिराक्षसश्रेष्ठभ्रातरोनिहतास्तव ॥ जनस्थानेमनुष्येणस्त्रीसहायेनरावण॥४८
खरश्चनिहतःसंख्येदूषणस्त्रिशिरास्तथा॥अहंचविकृतातेनकृतात्वत्कार्यसंमुखा॥४९॥ स्त्रीरत्नंचत्वदर्थंहिह्यानेतुमहमुद्यता॥
किंकरोमिममभ्रातर्हंतुंत्वांसमुपस्थितः ॥ ५० ॥ स्वसुस्तद्वदितंश्रुत्वारावणःक्रोधमूर्छितः ॥ जगामसहसातत्रजनस्थानेम
हामते ॥ ५१ ॥ अहरत्तत्रहैमेनछद्मयित्वामृगेणतम् ॥ रामंराजीवपत्राक्षंसीतांनीत्वागृहंययौ ॥ ५२ ॥ रामोपितन्महाश्चर्यं
दृष्ट्वाविस्मयमाययौ ॥ विलपन्प्रययौभ्रात्राऋष्यमूकेमहागिरौ ॥५३॥ सुग्रीवेणतथासख्यंकृत्वावैचाग्निसाक्षिकम् ॥ हत्वाच
वालिनंतत्रस्थापयित्वानृपासने ॥ ५४ ॥ सुग्रीवंचतथातेनससैन्येनहनूमता ॥ अन्यैश्चकपिभिःसार्द्धंययौलंकांमहायशाः
॥ ५५ ॥ बभूवतुमुलंयुद्धंनरवानररक्षसां ॥ लंकायांविविधैःशस्त्रैस्तथारमंतरुवृष्टिभिः ॥ ५६ ॥ निकुंभिलाशिलायांतुतप्य

मानंमहत्तपः ॥ मेघनादंससौमित्रिर्विषमस्थंमहायशाः ॥ ५७ ॥ संछाद्यशरधाराभिर्बिभीषणसहायवान् ॥ निजघानमहोर
स्कंशार्दूलइवकुंजरम् ॥ ५८ ॥ रामोऽपिकपिभिर्युक्तोहत्वाराक्षसमंत्रिणः ॥ पुत्रान्संबंधिनश्चैवनिजघानदशाननम् ॥ ५९
तत्रसंस्थापयाभासतद्भ्रातरमनिंदितम् ॥ लंकाधिपत्येविप्रर्षेमंदोदर्यास्तथैवच ॥ ६० ॥ इतितद्वैमहत्कर्मकृत्वारामोमहाय
शाः ॥ लक्ष्मणश्चमहाबाहुर्दृष्ट्वासर्वान्दिवौकसः ॥ ६१ ॥ तथादशरथंचैवपितरंसुविमानगम् ॥ शुद्धिंदृष्ट्वातुसीतायावन्हौमा
नुषविग्रहः ॥ ६२ ॥ विष्णुःपुष्पकमारुह्यसबिभीषणवानरः ॥ सीतयासहितश्चैवायोध्यायांचसमाययौ ॥ ६३ ॥ तत्रास
नेशुभेपित्र्येरामेराज्यंप्रशासति ॥ राजयक्ष्मालक्ष्मणंचजगृहेगेहसंस्थितम् ॥ ६४ ॥ तथाविधंलक्ष्मणंहिरोगग्रस्तंसमी
क्ष्यसः ॥ रामोनाममहातेजाश्चिंतयामासराघवः ॥ ६५ ॥ पप्रच्छचवसिष्ठंवैस्वगुरुंब्रह्मपुत्रकम् ॥ केनवैकारणेनायंरा
जयक्ष्माग्रहीतवान् ॥ ६६ ॥ इतिमेसंशयंदेवछिंधिधीरवरप्रभो ॥ इत्युक्तोमुनिनाविप्रकथयामासपातकम् ॥ ६७ ॥ इंद्र
जिद्वधजनितंघोरंपापंमहत्तरम् ॥ यस्मादनेनतपतःशिरश्छिन्नंहिराघव ॥ ६८ ॥ युद्धाद्वैविनिवृत्तस्यब्रह्मवंशस्यरक्षसः ॥
तस्मादयंमहातेजाराजरोगप्रपीडितः ॥ ६९ ॥ तपस्तपतुकुब्जाम्रेलक्ष्मणोलक्ष्मीवर्धनः ॥ ततोयंभविताशीघ्रंराजयक्ष्मवि
वर्जितः ॥ ७० ॥ त्वंचराममहाबाहोप्रायश्चित्तंतथात्मकम् ॥ कुरुष्वरावणवधजन्यपापापनुत्तये ॥ ७१ ॥ इतिश्रुत्वामहाते




यस्यदर्शनमात्रेणनरोयातिपरांगतिं ॥ अन्यच्चतीर्थप्रवरंवारुणंवरुणास्पदम् ॥ १२ ॥ वरुणेनतपस्तप्तंशतंवैदिव्यवर्षक
म् ॥ पाशंप्रापमहादेवात्तीर्थेऽस्मिन्वारुणेवरे ॥ १३ ॥ उपोष्यदशरात्राणियस्त्यजेदत्रदेहकम् ॥ सयातिपरमाँल्लोकान्याव
दाचंद्रतारकम् ॥ १४ ॥ यस्तत्रकुरुतेस्नानंनक्षत्रेवरुणाधिपे ॥ सयातिरुद्रसदनंपुनर्जायेतभूमिपः ॥ १५ ॥ यत्कर्मक्रियतेत
त्रतत्सर्वंशतसंख्यकम् ॥ अथान्यत्तेप्रवक्ष्यामिवाराहंतीर्थमुत्तमम् ॥ १६ ॥ यत्रविष्णुःक्रोडरूपीशिलारूपेणसंस्थितः ॥ त
त्रवैस्नानदानाद्यैर्लभतेपरमंपदम् ॥ १७ ॥ ततोवैउत्तरेभागेधनुषांचचतुःशते ॥ सप्तसामुद्रिकंनामतीर्थंविष्णुसलोकदम्
॥ १८ ॥ अश्वमेधत्रयस्यात्रफलंवैस्नानमात्रतः ॥ कुब्जाम्रकेपरंपुण्यंत्रिषुलोकेषुदुर्लभम् ॥ १९ ॥ भाग्येनयस्त्यजेत्प्राणाञ्ज
न्मनाशादिवर्जितः ॥ तत्रचिन्हंप्रवक्ष्यामिसप्तसामुद्रिकेमहत् ॥ २० ॥ विमलंहियथागांगंदृश्यतेचित्रवन्मुने ॥ क्षीरवर्णक
दाचित्तुकदाचित्पीतवर्णकं ॥ २१ ॥ कदाचिद्दृश्यतेरक्तंतथामारकतप्रभम् ॥ एतैर्नानाविधैश्चिन्हैर्ज्ञेयंतीर्थमिदंध्रुवं ॥ २२ ॥
तत्रस्नानादिनाविप्रलभ्यंतेसर्वसिद्धयः ॥ कुब्जाम्रकादुत्तरत्रऋषिपर्वतउत्तमे ॥ २३ ॥ ऋषयःसिद्धगंधर्वास्तत्रसंतिमहामु
ने ॥ नानाविधानिलिंगानितत्रसंतिपराणिवै ॥ २४ ॥ तस्योपत्यधरायांहिगंगायाःपश्चिमेतटे ॥ तपोवनंमुनीनांतुयत्रसौमि
त्रिरुत्तमः ॥ २५ ॥ प्राप्तराज्येतथारामेनिहतेदशकंधरे ॥ समाययौतपस्तप्तुंलक्ष्मणोलक्षणान्वितः ॥ २६ ॥ तस्मात्स्थलादधो

वरमास्थितः ॥ यावंत्यःकणिकादेहेपतंतिचरणांबुनः ॥ १० ॥ तावद्वर्षसहस्राणिब्रह्मलोकेमहीयते ॥ श्राद्धेचब्राह्मणाय
त्रनसंतिनृपसत्तम ॥ ११ ॥ पितरश्चैवतेषांचनरकेनिवसंतिहि ॥ मूर्खाअपिमहाबाहोब्राह्मणाःपुण्यसंचयाः ॥ १२ ॥ किंपु
नश्चैवविद्वांसोवेदवेदांगपारगाः ॥ धन्यास्तेपुरुषालोकेब्राह्मणानांप्रियाश्चये ॥१३॥ येविप्रपूजकामर्त्यानतेषांपुनरागमः॥
तेसर्वेनिर्जराज्ञेयाब्राह्मणान्प्रणमंतिये ॥ १४॥ विप्रपादोदकंपुण्यंसर्वव्याधिविनाशनम् ॥ १५॥ धन्यंवैकीर्तनंविष्णोर्ध
न्यंब्राह्मणपूजनम् ॥ विप्रपादोदकंधन्यंधन्यंगंगाजलंस्मृतम् ॥ १६ ॥ ब्राह्मणानांप्रसादाद्वैलभ्यंतेसर्वसिद्धयः ॥ ब्राह्मणा
नांप्रकोपेनदह्यंतेभव्यकोटयः ॥ १७॥ अविद्योपिमहाराजनावमान्योद्विजःसदा ॥ अविद्योवासविद्योवाब्राह्मणोभगव
त्तनुः ॥ १८॥ संसारतापलप्तानांभेषजंब्राह्मणाविभो ॥ यावद्ब्राह्मणपूजास्तियावद्गंगाधरातले ॥ १९ ॥ यावद्वेदमयोघोष
स्तावन्नोविशतेकलिः ॥ ब्राह्मणोऽस्तिपरंतत्त्वंब्राह्मणस्तुपरंतपः ॥ २० ॥ ब्राह्मणोस्तिपराविद्यानास्तिब्राह्मणतःक्वचित्॥
अविद्यंब्राह्मणंवापिसविद्यंवानराधिप ॥ २१ ॥ योवमन्यतिदुष्टात्मातस्यर्द्धिर्नश्यतिक्षणात् ॥ तस्मात्सर्वप्रयत्नेननावम
न्येद्विजंक्वचित् ॥ २२ ॥ ब्राह्मणानांप्रकोपेननहुषोजगतींगतः ॥ तस्मात्सर्वप्रयत्नेनब्राह्मणंनैवकोपयेत् ॥ २३ ॥ वेदले ॥४५॥
शोऽस्तियत्रेशशास्त्रलेशोऽपियत्रच ॥ तस्यदर्शनमात्रेणनश्यंतेपापराशयः ॥ २४ ॥ वेदवक्तातुयोविप्रःसवैयत्रप्रगच्छति ॥

गच्छंतितत्रनिधयःक्षेत्राणिनितरांतथा ॥२५॥ यत्रास्तिशास्त्रवेत्ताहितत्रविष्णुःसनातनः॥ पुराणसंहितावक्तायत्रसंचरतेद्वि
जः ॥ २६ ॥ तत्रैवसर्वतीर्थानिदेवाःसर्वेप्रतिष्ठिताः॥ब्रह्महत्यादिपापानांब्राह्मणादेवनिष्कृतिः ॥ २७ ॥ गतश्रियश्चमर्त्यस्य
तथाचैवगतायुषः ॥ द्विषंतिब्राह्मणान्येवैतेवानरकगामिनः ॥ २८ ॥ आसन्नमरणाज्ञेयाहतश्रीकाश्चराघव ॥ येद्विषंतिम
हाभागभिषक्कालज्ञसत्तमान् ॥ २९ ॥ यस्यभाव्यापरासिद्धिर्यस्यभाव्यामहार्थता ॥ यस्यभाव्यंपरंज्ञानंतस्यब्राह्मणसं
गतिः ॥ ३० ॥ तेनतप्तंहुतंतेनतेनजप्तंमहत्तरं ॥ पूजितायेनविप्रेशाःसत्यमेवनराधिप ॥ ३१ ॥ आधिव्याधिभयंनैवभक्त्या
यत्रद्विजार्चनम् ॥ यथासर्वेषुदेवेषुश्रेष्ठोवैगरुडध्वजः ॥ ३२ ॥ वेदेषुचतथासामशास्त्रेवेदांतउच्यते ॥ पुरीणांचयथाकाशीक्षे
त्राणांपरमंत्विदं ॥ ३३ ॥ हिमवान्पर्वतश्रेष्ठोयथापशुषुधेनवः ॥ तथासर्वपदार्थेषुब्राह्मणःपरिकीर्तितः ॥ ३४ ॥ इहचैवपर
त्रापिब्राह्मणस्तारकःस्मृतः ॥ केचिदैहिककर्माणःकेचित्परसुखप्रदाः ॥ ३५ ॥ विप्रेतरोमहाभागयदिशास्त्रविशारदः ॥ ब्रा
ह्मणश्चतथामूर्खस्तस्माच्छ्रेष्ठतरोमतः ॥ ३६ ॥ ब्राह्मणांश्चयथापूज्ययत्कर्मप्रकरोतिहि ॥ अविधानात्कृतमपिसंपूर्णंस्यादि
तिस्मृतिः ॥ ३७ ॥ अपृष्ट्वाब्राह्मणान्येवैस्वयंकर्मप्रकुर्वते ॥ तत्कर्मनिष्फलंज्ञेयमायासेनापियत्कृतम् ॥ ३८ ॥ दंभंकरोति
विप्रेषुविद्यायांयोनराधमः ॥ सयातिनरकंघोरंयावदाभूतसंप्लवम् ॥ ३९ ॥ योनिंदतिमहाराजब्राह्मणान्ब्रह्मतत्पर ॥ कुलं

तस्यक्षयंयातिमृतोनरकमाप्नुयात् ॥ ४० ॥ विद्ययाजेतियोविप्रान्सवैनरकमश्नुते ॥ ब्राह्मणार्थंयस्यवित्तंब्राह्मणार्थंपराक्र
मः ॥ ४१ ॥ सएवपुरुषोलोकेपुण्यात्मानैवसंशयः ॥ चांडालीष्वपिसंजाताब्राह्मणानांहिवीर्यतः ॥ ४२ ॥ तेऽप्यवध्यामहा
राजकिमुविद्वान्सुकर्मकृत् ॥ पौलस्त्यपुत्रोभगवन्हतोयद्वैत्वयाविभो ॥ ४३ ॥ रक्षणार्थंब्राह्मणानांगवांचैवमहामते ॥ अले
पस्यापितेरामलक्ष्मणस्यापिपातकम् ॥ ४४ ॥ लोकानुवृत्तयेऽवश्यंकर्तव्यंपापसंक्षयम् ॥ कुब्जाम्रकात्परंक्षेत्रंब्रह्महत्यानि
वारणम् ॥ ४५ ॥ नास्तिराघवशार्दूलपृथिव्यांपुण्यदंमहत् ॥ लक्ष्मणेनप्रगंतव्यंत्वयाचाप्यत्रभूमिप ॥ ४६ ॥ इतिश्री
स्कंदपुराणेकेदारखंडेमायापुरीमाहात्म्येकुब्जाम्रकेब्राह्मणप्रशंसानामद्वाविंशतितमोऽध्यायः ॥ २२ ॥ ॥ छ ॥
॥ नारदउवाच ॥ ॥ लक्ष्मणेनतपस्तप्तंकथंकुब्जाम्रकेमहत् ॥ कस्मिन्प्रदेशेभगवन्कानितीर्थानितद्वद ॥ १ ॥ रामेणापिकृ
तंकिंवाकस्मिन्क्षेत्रेकृतंतपः ॥ एतत्सर्वंसमासेनकृपयावदमेप्रभो ॥ २ ॥ ॥ स्कंदउवाच ॥ ॥ सर्वंतेवच्मिविप्रेशमहदज्ञा
ननाशनम् ॥ लक्ष्मणेनयथातप्तंब्रह्महत्यानिवारणम् ॥ ३ ॥ रामेणापिपरंक्षेत्रेकृतंपापप्रणाशनम् ॥ भारापनुत्तयेभूम्याःप्रा
र्थितस्यपरात्मनः ॥ ४ ॥ कृतदुष्टविनाशस्यरक्षणार्थंभवादृशाम् ॥ श्रीरामस्यमहाभागलीलामानुषरूपिणः ॥ ५ ॥ पुण्य ॥ ४६ ॥
पापादिकंनैवनैवदोषविकल्पना ॥ विशेषतोऽस्यपापस्यरावणस्यदुरात्मनः ॥ ६ ॥ गोविप्रहंतुर्विप्रेशमारणेनास्तियद्यपि

जाविस्मयाविष्टमानसः ॥ पप्रच्छगुरुमासीनंवसिष्ठंवाग्विदांवरम् ॥ ७२ ॥ ॥ रामउवाच ॥ ॥ ब्रह्मवंशसमुत्पन्नराव
णस्यवधान्मुने ॥ कथंमेपातकंजातंपापस्यदुरितात्मनः ॥ ७३ ॥ गोविप्रघातकस्यापिदेवानांचैवद्रोहिणः ॥ हर्तुश्चपरदारा
णांपरक्षेत्रधनार्थिनः ॥ ७४ ॥ कथंतन्मारकेपापंलुब्धस्योच्छास्त्रवर्तिनः ॥ एतन्मेसंशयंछिंधिसर्वज्ञोऽसियतोमुने ॥ ७५ ॥
॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायापुरीमाहात्म्येकुब्जाम्रकलक्ष्मणोपाख्याननामएकविंशतितमोऽध्यायः ॥ २१ ॥ ॥
॥ वसिष्ठउवाच ॥ ॥ शृणुराममहाबाहोब्राह्मणानांमहामते ॥ माहात्म्यंसर्वपापघ्नंतापत्रयविनाशनम् ॥ १ ॥ ब्रह्मणाजंग
मामूर्तिःश्रीविष्णोःपरमात्मनः ॥ अतएवहिविख्याताःक्षितिदेवामहामते ॥ २ ॥ येषांवैदर्शनात्सद्योनश्यंतेपापराशयः ॥
ब्राह्मणानांचसंचारोयत्रतिष्ठतिसर्वदा ॥ ३ ॥ तत्रसर्वाणितीर्थानिवसंतिनितरांसदा ॥ भोजनीयाःप्रयत्नेनयद्यदिच्छंति
तेनते ॥ ४ ॥ यत्किंचिद्दुर्लभंवस्तुदेयंतद्ब्राह्मणायवै ॥ ब्राह्मणानांचसंगत्याब्राह्मणानांचपूजनात् ॥ ५ ॥ तर्पणाद्ब्राह्मणानां
चपितृणांतारणंभवेत् ॥ तस्मात्सर्वप्रयत्नेननरोब्राह्मणमाश्रयेत् ॥ ६ ॥ ब्रह्मवीर्यसमुत्पन्नोवरजातिषुवाविभो ॥ सोपिदेवो
महाराजविज्ञेयोभव्यलिप्सुभिः ॥ ७ ॥ ब्राह्मणस्यपदांगुष्ठेदक्षिणेनरपुंगव ॥ सर्वतीर्थानिपुण्यानिवसंतिनितरांसदा ॥
॥ ८ ॥ यावंतिविप्रपादोत्थरजांसिशिरसानरैः ॥ धार्यंतेनरशार्दूलतावद्वर्षसहस्रकम् ॥ ९ ॥ स्वर्गलोकेवसेन्मर्त्योविमान

॥ २१ ॥ सोपिलक्ष्मणनामावैविष्णोरंशोमहात्मनः ॥ स्थितवांस्तत्रस्वांशेनपूर्णोपिप्रभुरच्युतः ॥ २२ ॥ तत्रैववामभागेतु
शिवोज्ञानगतिप्रभुः ॥ नाम्नालक्ष्मणेश्वरःख्यातोदर्शनात्सर्वपापहा ॥ २३ ॥ गंगायाःपश्चिमेतीरेयत्रसिंदूरवर्णका ॥ मृ
त्तिकावर्ततेविप्रतत्रलक्ष्मणकुंडकम् ॥ २४ ॥ तत्रस्नात्वाचजप्त्वाचफलानंत्यंलभेन्नरः ॥ तस्यैववामभागेतुमुनिकुंडमितिस्मृ
तम् ॥ २५ ॥ तत्रस्नात्वाशुभाँल्लोकान्प्राप्नोतिपरमंपदम् ॥ तत्रविष्णोर्गदाविप्रनिहताक्रुद्धचेतसा ॥ २६ ॥ विष्णुनावृत्रदमने
तत्रास्तिचिन्हितंजले ॥ इंद्रकुंडमितिख्यातंतत्रैवभवमोचनम् ॥ २७ ॥ यत्रेंद्रस्तपसावृत्रंनिजघानमहामुने ॥ तस्यवामेम
हत्तीर्थंवायुकुंडमितिस्मृतम् ॥ २८ ॥ यत्रवायुर्महाभागवसतेमुक्तिलालसः ॥ लक्ष्मणकुंडकाद्दक्षेधेनुकुंडमितिस्मृतम् ॥ २९
स्नात्वातत्रमहाभागशतगोदानजंफलम् ॥ तस्मिन्नेवस्थलेरम्येनंदीनाम्नाशिलाशुभा ॥ ३० ॥ स्पर्शमात्रेणयस्यास्तुमुच्यते
सर्वपातकैः ॥ नंदीकुंडमितिख्यातंसर्वतीर्थेषुचोत्तमम् ॥ ३१ ॥ ततउत्तरदिग्भागेनाम्नाधर्मधरानदी ॥ धर्मधारेतिविख्याता
सर्वपापक्षयंकरी ॥ ३२ ॥ आयातिपर्वतश्रेष्ठाद्धर्माख्याद्धर्मवर्द्धिनी ॥ तस्यांस्नात्वानरोभक्त्यावाजपेयफलंलभेत् ॥ ३३ ॥
धर्मेश्वरोमहादेवोवर्ततेलिंगरूपधृक् ॥ यःस्नापयतितल्लिंगमंबुनाभक्तितत्परः ॥ ३४ ॥ सर्वान्कामानवाप्नोतिजलदानेनना
रद ॥ अथान्यच्चप्रवक्ष्यामिपीठंपरमदुर्लभम् ॥ ३५ ॥ यत्रैकरात्राल्लभतेसिद्धिंपरमदुर्लभाम् ॥ मायेश्वरीतिविख्यातासर्व



सिद्धिप्रदायिनी ॥ ३६ ॥ यत्ररुद्रःस्वयंसाक्षाद्दैवैःसंनिहितःसदा ॥ मायेश्वरेतिनाम्नावैकृष्णवर्णोमहामुने ॥ ३७ ॥ तस्यवै
दर्शनाद्यातिरुद्रलोकंदुरासदम् ॥ आनागतीर्थंतोविप्रतथाहैमवतीतटम् ॥ ३८ ॥ मायाक्षेत्रमिदंख्यातंसर्वक्षेत्रोत्तमोत्तम
म् ॥ यस्यैकवारमपियोदर्शनंप्रकरोतिहि ॥ ३९ ॥ कोटिजन्मकृतैःपापैर्मुच्यतेनात्रसंशयः ॥ धन्यानांवसतिर्ह्यत्रक्षेत्रेरा
त्रौमहामुने ॥ ४० ॥ नतेषांपुनरावृत्तिःकल्पकोटिशतैरपि ॥ अस्यक्षेत्रस्यमाहात्म्यंकोवावर्णयितुंक्षमः (समर्थः) ॥ ४१ ॥ श्री
विष्णोर्यत्रसान्निध्यमीश्वरस्यतथैवच ॥ दक्षादिभिर्मुनिवरैःकृतायज्ञवरायतः ॥ ४२ ॥ एतत्क्षेत्रसमंक्षेत्रंत्रिषुलोकेषुदु
र्लभम् ॥ मृतायत्रमहाभागप्रयांतिपरमंपदम् ॥ ४३ ॥ तिर्यग्योनिगताश्चापितथास्थावरतांगताः ॥ प्रयांतिभुवनंविष्णो
स्त्यक्तदेहामहामते ॥ ४४ ॥ शृणुविप्रपुरावृत्तंचित्रंपरमकंयथा ॥ यथात्रप्रवरेस्थानेवृषव्याघ्रौमहामुने ॥ ४५ ॥ ययतुःप
रमांसिद्धिंप्राप्तेचापरजन्मनि ॥ इतिहासमिमंश्रुत्वासर्वपापैःप्रमुच्यते ॥ ४६ ॥ धर्मक्षेत्रेकुरुक्षेत्रेबभूववणिजांवरः ॥ ब्रह्मद
त्तइतिख्यातःकुबेरइवचापरः ॥ ४७ ॥ एकदासमहाभागशकटारोप्यद्रव्यकम् ॥ सुवर्णमुक्तारत्नानिप्रवालानिचनारद
॥ ४८ ॥ तीर्थयात्राप्रसंगेनदैवात्कुब्जाम्रकंययौ ॥ व्यापारश्चकृतस्तेनतीर्थयात्राचवैतथा ॥ ४९ ॥ गतोगेहेब्रह्मदत्तस्तस्यैकवृ
षभस्तथा ॥ सार्थाच्चैवपरिभ्रष्टोभूयःकुब्जाम्रकंययौ ॥ ५० ॥ देवालयसमीपेसस्थितवान्कतिचित्समाः ॥ निर्माल्यकल्पप

त्राणिभक्षयन्वृषभोमुने ॥ ५१ ॥ दिनेस्वयंवनंयातिरात्रावायातितत्रवै ॥ एवंहिवसतस्तस्यतत्रदेवगृहाद्बहिः ॥ ५२ ॥ व्या
घ्रश्चैकोरिपुर्जातोदृष्ट्वापुष्टशरीरकम् ॥ तत्प्रसंगाच्चतत्रैवसमायातिजिघांसया ॥ ५३ ॥ एवंतयोर्महद्वैरंबभूवमुनिपुंगव ॥
वृषभःसोपिपुष्टांगोनतंगणयतिध्रुवम् ॥ ५४ ॥ तीक्ष्णशृंगोमहोच्चोवैककुद्मान्दृढविक्रमः ॥ सहस्रासोपिव्याघ्रश्चवृषभंन
जिघांसति ॥ ५५ ॥ एकदामुनिशार्दूलगतोऽरण्येमहावृषः ॥ तृणानिखादितुंविप्रनिर्जनेऽतिभयंकरे ॥ ५६ ॥ महावराह
संछन्नेसरीसृपनिषेविते ॥ व्याघ्रऋक्षशताकीर्णेदुर्गमेखड्गसेविते ॥ ५७ ॥ तयोर्युद्धंसमभवन्महावृषभव्याघ्रयोः ॥ वृषश्चतं
महाभागशृंगाग्रेव्याघ्रकंतदा ॥ ५८ ॥ दधारचतथाभूमौचिक्षेपबलिनंखलु ॥ उत्थायसहसासोपिवृषंकष्टाजघानह ॥ ५९ ॥
सोऽपिसिंहोमहातेजा आविद्धोवृषभेणह ॥ ममारचमहाभागतस्मिन्कुब्जाम्रकेवने ॥ ६० ॥ अवंतिविषयेतौचकुब्जाम्रमृतिवै
भवात् ॥ पितापुत्रौराजपुत्रौबभूवतुरनिंदितौ ॥ ६१ ॥ पूर्वजन्मविरोधेनजातौतत्रविरोधिनौ ॥ वृषोराजाबभूवाथसिंहोवैराज
पुत्रकः ॥ ६२ ॥ एकपुत्रस्तदाराजाकिंचित्पुत्रंनभाषते ॥ सोऽपिराजकुमारश्चराजानंनचपश्यति ॥ ६३ ॥ प्रजायाश्चानुरोधेन
नकुमारंजिघांसति ॥ राजास्मरतिवृत्तांतंपूर्वजन्मभवंखलु ॥ ६४ ॥ इतितयोर्महाभागदैवयोगादभून्मतिः ॥ कुब्जाम्रकंमहा
तीर्थंगंतुंराज्ञोमहात्मनः ॥ ६५ ॥ सकुमारोमहाराजोनिजजानपदैर्युतः ॥ ययौहिमाद्रिनिकटेमायापुर्य्यांमहामते ॥ ६६ ॥




॥ पातकंतदपिप्राज्ञलोकचेष्टानुसारिणा ॥ ७ ॥ प्रायश्चित्तेकृतेतेनलक्ष्मणेनचनारद ॥ कुब्जाम्रकोत्तरेभागेगव्यूत्यर्द्धेतद
र्द्धके ॥ ८ ॥ क्रोशेगंगातटेपश्चान्नानामुनिगणान्विते ॥ अद्यापितत्प्रदेशेहिलक्ष्मणस्यांशरूपतः ॥ ९ ॥ सर्परूपेणशेषांशो
वर्ततेभगवत्प्रियः ॥ शिवमाराधयामासवर्षैर्द्वादशसंख्यकैः ॥ १० ॥ निराहारोमहातेजाःशिवसंन्यस्तमानसः ॥ जजापपर
मांविद्यांषड्वर्णांभक्तितत्परः ॥ ११ ॥ वाय्वाहारोवर्षशतंशतंपत्रफलाशनः ॥ तस्थावेकेनपादेनशिवभक्तोजितेंद्रियः ॥ १२ ॥
ततःशिवोमहाभागप्रत्यक्षंतस्यनारद ॥ बभूवसहसातत्रकांतिव्याप्तदिगंबरः ॥ १३ ॥ वृषसंस्थोऽर्द्धचंद्रेणसंशोभितलला
टकः ॥ व्याघ्रचर्मपरीधानोव्यालयज्ञोपवीतवान् ॥ १४ ॥ उमानीतार्द्धवपुष्कस्त्रिनेत्रोगजकृत्तिधृक् ॥ उवाचवचनंतत्रसौ
मित्रिंमित्रवत्सलम् ॥ १५ ॥ ॥ शिवउवाच ॥ ॥ साधुसाधुमहाभागसुमित्रानंदवर्धन ॥ गतंतेपातकंसर्वंमत्प्रसादेनल
क्ष्मण ॥ १६ ॥ अस्मिन्क्षेत्रेसकृत्स्नानाद्ब्रह्महत्यात्रिकोटिभिः ॥ मुच्यतेकिमुत्वंशुद्धोमुनिर्हिंसकहिंसकः ॥ १७ ॥ शुद्धस्त्वंस
र्वपापेभ्योदेहजेभ्योमहाशय ॥ गच्छगच्छस्वकेस्थानेकुरुराज्यसुखानिच ॥ १८ ॥ गतोवैराजयक्ष्मातेदेहतःशुभगेहतः
॥ त्वन्नाम्नेदंपुण्यतमंलक्षितंवैभविष्यति ॥ १९ ॥ अहंचभगवान्नित्यंलक्ष्मणेश्वरतांगतः ॥ तिष्ठामिमुक्तिदोनृणामपिदुष्कृ
तिनांतथा ॥ २० ॥ ॥ स्कंदउवाच ॥ ॥ इत्युक्त्वाथचदत्वाचलक्ष्मणायवरंतदा ॥ तत्रैवांतर्दधेरुद्रोभक्तिगम्योदुरासदः

त्वातत्रनरोभक्त्याशिवसायुज्यमाप्नुयात् ॥ तत्रैवसूर्यकुंडाख्यंतीर्थंपरमपावनम् ॥ ८३ ॥ यस्यसंदर्शनादेवसूर्यलोकेमही
यते ॥ तत्रैवपश्चिमेभागेतीर्थंगालवसंज्ञितम् ॥ ८४ ॥ यत्रस्नात्वापरंयातिनपुनरावर्त्ततेयतः ॥ ततउत्तरवायव्येशिवोयज्ञे
श्वरःप्रभुः ॥ ८५ ॥ विष्णुनास्थापितश्चात्रयज्ञादौविघ्ननाशने ॥ यत्रविष्णुश्चक्ररूपीतत्रेदंलिंगमुत्तमम् ॥ ८६ ॥ इदंपरमकं
पीठंसर्वसिद्धिप्रदंनृणाम् ॥ यत्रार्चयासकृदपिलभतेयद्यदिच्छति ॥ ८७ ॥ तस्यवामप्रदेशेहिशिलाविष्णुकलेवरा ॥ यस्यां
कृतेहृषिकेशस्त्रेतायांभरतोहरिः ॥ ८८ ॥ द्वापरेवामनोदेवोभूयश्चभरतःकलौ ॥ तस्यसंदर्शनादेवमहापातककोटयः ॥ ८९ ॥
नश्यंतिब्राह्मणश्रेष्ठसिद्ध्यंतिसर्वसिद्धयः ॥ एतन्नाम्नैवसकलंप्राप्नोतिनिजवांछितम् ॥ ९० ॥ इतितेकथितंदेवमाहात्म्यंजग
दीशितुः ॥ हृषीकेशाश्रमेपुण्येयथारैभ्योह्यनुग्रहम् ॥ ९१ ॥ कुब्जाम्रकस्यमाहात्म्यंयःशृणोतिमहामते ॥ सोपिवैकुंठनिल
येयातिब्रह्मसनातनम् ॥ ९२ ॥ यइदंपठतेनित्यंमहापातकनाशनम् ॥ मोदतेत्रिदिवैःसार्द्धंपितृभिःसहनारद ॥ ९४ ॥ अ
स्यक्षेत्रस्यमाहात्म्यंवक्तुंकेनापिशक्यते ॥ संक्षेपेणमयाख्यातंपापघ्नंसर्वकामदम् ॥ ९५ ॥ यइदंपठतेश्राद्धेशृणोतिचमहा
मते ॥ तारिताःपितरस्तेनसत्यमेवनसंशयः ॥ ९६ ॥ ॥ इतिश्रीस्कंदपुराणेकेदारखंडेमायापुरीमाहात्म्येकुब्जाम्रकमा ॥ ४३ ॥
हात्म्यंनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ इतिमायाक्षेत्रमाहात्म्यंसमाप्तम् ॥ श्रीरस्तु ॥ शुभंभवतु ॥ ॥ छ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मज गङ्गाविष्णु खेमराजाभ्यां स्वकीये
"श्रीवेङ्कटेश्वर" मुद्रालये मुद्रितम् शके १८०९ संवत् १९४४

यावत्प्रविशतेराजाकुब्जाम्रेक्षेत्रउत्तमे ॥ नानामुनिगणाकीर्णेदेवगंधर्वसेविते ॥ ६७॥ तावत्सस्मारपुत्रोपिवृत्तांतंपूर्वसंभवम् ॥ वैरस्यकारणंस्वस्यराज्ञश्चैवमहामते ॥ ६८ ॥ तस्मिन्नेवक्षणेतौचनिर्वैरौहिबभूवतुः ॥ क्षेत्रस्यास्यप्रभावेणशुद्धौचैव तथामुने ॥ ७० ॥ तत्रैवस्थितवंतौचकिंचित्कालंमहामते ॥ कालेनाव्ययमापन्नौयत्रगत्वानशोचति ॥ ७१ ॥ इतिचैवतथा प्राप्तंमोक्षश्चापरजन्मनि ॥ कुब्जाम्रकेमृतोविप्रहत्यायुक्तोपिवानरः ॥७२ ॥ मोक्षंप्राप्नोतिसततंकुष्ठीवामृतसंततिः ॥ अथा न्यच्चात्रपरमंतीर्थंवाराहसंज्ञितम् ॥ ७३ ॥ धरण्यायत्रनियतंसंस्तुतोभगवानजः ॥ तस्मादिदंपरंक्षेत्रंवाराहंनामविश्रुतम् ॥ ७४ ॥ यत्रब्रह्मादयोदेवास्तपस्तेपुःसुदारुणम् ॥ वाराहतीर्थमहिमाकेनवर्णयितुंक्षमः ॥७५ ॥ तत्रैकापरमामूर्तिःशिलारूपामहात्मनः ॥ तच्छिलास्पर्शनादेवविष्णुलोकेवसेच्चिरम् ॥ ७६ ॥ सूर्यपुत्रीनदीतत्रसमायातिमहामते ॥ गालवेनपुरासूर्यःसमाराधितईश्वरः ॥ ७७ ॥ प्रसन्नश्चाब्रवीत्सूर्योवरंवरयगालव ॥ सोब्रवीद्देहिभगवंस्तवपुत्रीतुयास्मृता ॥ ७८ ॥ यमुनेतिसमाख्यातानदीपरमपावनी ॥ साससमायातुसततंगंगयासंगताभवेत् ॥ ७९ ॥ तीर्थराजप्रयागाख्यसमंतीर्थंभवतिति ॥ अत्रस्नास्यंतियेमर्त्यास्तेप्रयांतुपरंपदम् ॥८० ॥ भवतोऽत्रस्थितिश्चास्तुसर्वतीर्थेषुचोत्तमा ॥ सूर्यश्चापितथेत्युक्त्वाददौवरमनुत्तमम् ॥ ८१ ॥ यमुनाचमहाभागकलयायात्रसंस्थिता ॥ तस्यास्तुसंगमपुण्येप्रयागात्कोटिसंख्यके ॥ ८२ ॥ स्ना

र्थमिहचायातोब्रूह्यागमनकारणम् ॥ ॥ नारदउवाच ॥ ॥ भवतांदर्शनार्थायब्रह्मलोकादिहागतः ॥ धर्माधर्मस्यसर्वस्य निर्णयंद्रष्टुमागतः ॥ १३ ॥ ॥ इतिश्रीनासिकेतोपाख्यानेसप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ छ ॥

॥ नासिकेतउवाच ॥ ॥ तयोरेवंसंवदतोर्नारदस्ययमस्यच ॥ तत्रस्थानेचदिव्यानांविमानानांशतानिच ॥ १ ॥ भेरीमृदंगादिघोषैर्गीतवादित्रनिःस्वनैः ॥ घंटामर्द्दलवीणानांरवेणपणवस्यच ॥ २ ॥ आगतानिसहस्राणितेजःपुंजयुतानिच ॥ तेनवैसहसाविप्रायमोंतर्द्धानमागमत् ॥ ३ ॥ ब्रह्मपुत्रोविलक्षोभूदवदन्नैवकिंचन ॥ क्षणेनैवागतोधर्मोभयातोभ्रष्टमानसः ॥ ॥ ४ ॥ ॥ नारदउवाच ॥ ॥ सत्यंब्रूहिमहाराजविष्णुतुल्यपराक्रम ॥ आसुराराक्षसाघोराःसर्वेतेवशसंस्थिताः ॥ कस्मात्त्वंभयसंत्रस्तोवायुवेगेननिर्गतः ॥ ५ ॥ ॥ धर्मराजउवाच ॥ ॥ अतिगुह्यांमुनिश्रेष्ठकथांपापप्रणाशिनीं ॥ ब्रवीमिसकलांविद्वन्पुनर्धर्मविवर्धनाम् ॥ ६ ॥ मृत्युलोकेमहाप्राज्ञःसत्यव्रतपरायणः ॥ जनकोनामविख्यातःप्रजानांपरिपालकः ॥ जितेंद्रियोदानपरःक्रोधमात्सर्यवर्जितः ॥ ७ ॥ तस्यपत्नीसुरूपासीन्नाम्नासत्यव्रताशुभा ॥ सर्वलक्षणसंपूर्णासर्वधर्मपरायणा ॥ ८ ॥ भर्तारंविष्णुबुद्ध्यायानित्यंशुश्रूषतेशुभा ॥ पतिव्रतापतिप्राणभर्तृवाक्येसदारता ॥ सुखितेसुखितानित्यंदुःखितेदुःखिताचया ॥ ९ ॥ दक्षाचप्रियवाङ्नित्यमक्रोधाऽनृतवर्जिता ॥ अतिथिःपूज्यतेनित्यंसर्वसद्गुणशालिनी ॥ १० ॥

जनकस्यप्रियाभार्याधर्मकार्येसदारता ॥ सायातिब्रह्मणोलोकंविमानवरमास्थिता ॥ ११ ॥ शक्रादयोदेवगणास्तस्याःसंमुखमागताः ॥ पितामहश्चतस्यावैप्रणतिंकृतवान्विभो ॥ १२ ॥ इंद्रालयस्यमध्येषुप्रविष्टोजनकस्तथा ॥ तंगृहीत्वापतिंदेवीसर्वदेवगणैर्वृता ॥ १३ ॥ गतासाब्रह्मणोलोकंतस्याश्चतेजसामुने ॥ लीनोहंभयभीतस्तुकारणंतेनिवेदितम् ॥ १४ ॥ ॥ नासिकेतउवाच ॥ ॥ इत्यादिसर्वमाख्यातंतत्रदृष्टंमुनीश्वराः ॥ संदेहोनात्रकर्तव्यःसर्वप्रत्यक्षदर्शनात् ॥ १५ ॥ ॥ वैशंपायनउवाच ॥ ॥ जनमेजयमहाराजपूर्वकल्पाश्रितांकथां ॥ श्रृणोतिश्रद्धयायुक्तःसर्वपापैःप्रमुच्यते ॥ १६ ॥ नासिकेतेनकथितमाख्यानंपावनंमहत् ॥ १७ ॥ धन्यंस्वस्त्ययनंचैवव्याधिदारिद्र्यनाशनम् ॥ श्रृण्वन्नरोविमुक्तःस्याज्जन्मसंसारबंधनात् ॥ १८ ॥ ॥ इतिश्रीनासिकेतोपाख्यानेधर्माधर्मनिर्णयोनामअष्टादशोध्यायः ॥ १८ ॥ समाप्तम् ॥ ॥ छ ॥

इदंपुस्तकंश्रीकृष्णदासात्मजेन गंगाविष्णुनाखेमराजेनच मोहमय्यां स्वकीये श्रीवेंकटेश्वरमुद्रायंत्रालये
मुद्रितं संवत् १९४५ शकाब्दाः १८१०

गंगाविष्णुश्रीकृष्णदास "श्रीवेङ्कटेश्वर" छापखाना. (मुंबई.)

## ॥ इति नासिकेतोपाख्यानं समाप्तम् ॥

तस्मिन्मार्गेसुखंयातिगोप्रदानेनमानवाः ॥ गजाश्वरथदानेनयममार्गःसुखावहः ॥ १६ ॥ ॥ इतिश्रीनासिकेतोपा
ख्यानेषोडशोध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
नासिकेतउवाच ॥ ॥ पुनरेवप्रवक्ष्यामियममार्गंभयंकरम् ॥ तस्मिन्मार्गेमहाघोरेविषमाःपर्वताःक्वचित् ॥ १ ॥ कीलकाश्च
क्वचिद्घोराअसिपत्रवनंक्वचित् ॥ क्वचिद्वर्षतिपाषाणाःक्वचित्संतप्तवालुकाः ॥ २ ॥ हिमालयाच्छतगुणंक्वचिच्छीतंसुदारु
णम् ॥ अंधकारंमहारौद्रंक्वचिद्घर्मःसुदारुणः ॥ ३ ॥ क्षुरधारमयंमार्गंक्वचिद्वैपूयशोणितम् ॥ तत्रवैतरणीनामनदीक्षुद्राभयं
करा ॥ ४ ॥ शतयोजनविस्तीर्णाकाकगृध्रैःसमन्विता ॥ तस्यांमज्जंतिपापिष्ठादुःखशोकसमन्विताः ॥ ५ ॥ गोप्रदानस्यक
र्तारस्तेतरंतिद्विजोत्तमाः ॥ तीर्थस्नानरतैर्मर्त्यैःसासरित्सुतराभवेत् ॥ ६ ॥ तस्मिन्नेवतुमार्गेयेधर्मिष्ठाःसुखसंयुताः ॥ एक
एवास्तिसर्वत्रव्यवहारोद्विजोत्तमाः ॥ ७ ॥ एकस्मिन्समयेविप्राधर्मराजसभांप्रति ॥ सूर्यतेजःप्रतीकाशोह्यागतोनारदोमु
निः ॥ ८ ॥ यमस्तुनारदंदृष्ट्वाप्रत्युत्थायकृतांजलिः ॥ अर्घ्यपाद्यादिभिश्चैवनारदंप्रत्यपूजयत् ॥ ९ ॥ आसनेचोपविष्टस्तु
नारदोदेवदर्शनः ॥ शोभतेस्ममहातेजास्तारापतिरिवांबरे ॥ १० ॥ ततोवैवस्वतोराजानारदंप्रत्युवाचह ॥ स्वागतंभोद्विजश्रे
ष्ठब्रह्मपुत्रमहामुने ॥ ११ ॥ अद्यमेसफलंजन्ममामाद्यसफलंदिनम् ॥ अद्यमेसफलंसर्वंभवदालोकनान्मुने ॥ १२ ॥ किम

